938

# PADMINIPARINAYA

(A DRAMA IN TEN ACTS)

25028

BY

ELATTUR SUNDARARAJA BHATTACHARYA




EDITED BY

D. T. TATACHARYA, M.O.L.
READER IN SANSKRIT
*Sri Venkatesvara Oriental Institute, Tirupati.*

AND

R. PARTHASARATHI BHATTACHARYA
VAIKHANASA PANDIT
*Sri Venkatesvara Oriental College, Tirupati.*




2359
8




O19,2S8,1
152J52
25028

TIRUMALAI-TIRUPATI DEVASTHANAMS PRESS

TIRUPATI

1952



श्रीः

# पद्मिनीपरिणयः

( दशाङ्कं प्रकरणम् )

महाकविना

**एलत्तूर् श्री सुन्दरराज भट्टाचार्येण**

विरचितः

श्री. डि. टि. ताताचार्य M.O.L.

श्री. आर्. पार्थसारथि भट्टाचार्याभ्यां

सम्पादितः






तिरुमलै तिरुपति देवस्थान मुद्रणालये

मुद्रितः

25028

॥ श्रीः ॥

श्रीविखनसगुरुभ्यो नमः

# श्रीसुन्दरराजकविजीवितसङ्ग्रहः

श्रीवरदराजसङ्कलितः ।

श्रीमत्सुन्दरराजसूरिचरितप्रख्यापनायोत्सुक-
स्तद्भ्रातृव्यतनूभवो वरदराजाख्यस्तदन्ते वसन् ।
तत्पादाम्बुजयुग्ममेव कलयन् स्वान्ते करोत्युद्यमं
श्रीवैखानसपार्थसारथिसुहृद्वर्येण सम्प्रेरितः ॥

इत्थम् अतीतेषु बहुषु वत्सरेषु अनन्तशयनसंस्थानन्तर्गते इलत्तूराख्याग्रहारे

आसीदत्र कुले सुधीर्वरदराजाख्यस्स कृष्णाम्बया
सत्या सद्गृहिधर्ममार्गनिरतो भैषज्यशास्त्राध्वरी ।
तस्यासन् गुणिनस्सुताः सहृदया अष्टौ तथा कन्यका
काचित्ताभिरयं प्रजाभिरमता-प्रीतिं दधौ शोभनाम् ॥

यो जातोऽध्वरिराट् पुरा स भुवने भूयोऽपि कृष्णाम्बिका-
गर्भालङ्करणो भवन् प्रथमतो जज्ञे धरण्यां पुमान् ।
कोलम्बे वरषोडशोत्तरसहस्राब्दे प्लवाख्येऽर्कदै-
वत्ये भेऽस्मदुदारभाग्यपरिणामो लोकपुण्यांशतः ॥

वार्तां विदन् शङ्करसुब्बनामा कार्तान्तिकः पुत्रजनेः स्वसख्युः ।
सद्यो मुदा संसदि जातमेनं हृद्यं कवीन्द्रं भवितारमूचे ॥

अथ सुधीः सुन्दरराजतनुजन्मा वरदराजः सत्सन्तानोत्सवे व्रीहिदानादिभिर्भूसुरानानन्दयन् यथाविधि च जातकर्मोत्थाने समाचरन् सुसमय एनं वैष्णव्या पैतामह्या च शुभया आख्यया आह्वापयामास । ततः क्रमेण समेधमानमेधाविलासं विजृम्भमाणतत्तत्कालीनलीलाविनोदं सर्वजनस्पृहणीयसर्वाङ्गसुन्दरं हृद्यसरोजोज्ज्वलन्मुखारविन्दं सुकुमारं कुमारं श्रीविखनोमुनीन्द्रमतमनतिक्रम्यान्नप्राशनादिभिस्समेधयामास । अयं वरदराजात्मजः श्रीमान्

आबाल्यतः सर्वमनोहराभिर्गीर्भिस्सदा रञ्जितसर्वलोकः ।
प्राप्यादिमं स्वाश्रममुज्ज्वलन्त्या ब्रह्मश्रिया ऽऽचार्यवरं सिषेवे ॥

अथ नवमे वयसि वर्तमानं निजात्मजं श्रीवरदार्यः श्रीमदनन्तशयनसंस्थानपण्डित-वरेण्य श्रीपरदेवताकरुणापरिणाम श्रीरामस्वामिशास्त्रिणः सन्निधिं प्रापय्य तं महात्मानमर्थयामास तस्य काव्योपदेशाय। स पण्डितसार्वभौमस्तमेनमन्तेवासिपदेऽङ्गीकृत्य सद्यस्सुसमये श्रीरामोदन्तकाव्यपठनायाज्ञाप्य 'वागर्थावि' वेति प्रथमतः कालिदासीयमङ्गलपद्यं पाठयित्वा 'वत्स! श्लोकपठनात्परं पदविभागः कर्तव्यः, उच्यता' मिति। गुर्वाज्ञानुपदमेव अस्मत्सुन्दरराजसुधीवरेण्यः 'ज्ञातं ज्ञातं, वागर्थावि' वेति स्वयमेव पदविभागमकरोत्। तदानीं श्रीरामस्वामिशास्त्रिकविमणिः सञ्जातविस्मयः 'ननु महाभाग वरदराज सखे! सुप्रजा असि। मामेवैनं निश्चिनु। अयं मदीयान्तेवासी कविचक्रवर्ती भविष्यति इति सत्वरघोषमाघोषयति स। तदारभ्य काव्यनाटकालङ्कारादीन् श्रीमच्छास्त्रिसन्निधावभ्यस्यन् अन्तरान्तरा स्वसूत्रस्वशाखास्वागमादीन् पितृमुखेनाधीयानः पञ्चदशे वयसि सर्वशास्त्रमर्मवेदी कांश्चिच्छ्लोकानपि रचयितुमारेभे।

अथ श्रीमन्तः इलतूर् रामस्वामिशास्त्रिणः श्रीमदनन्तशयनसंस्थानाधिप श्रीविशाखमहाराजसन्निधाने वसन्तः श्रीकेरलवर्मदेवादीन् शास्त्राण्यध्यापयन्तः स्यानन्दूरनगरे चिरायन्ति स। तदानीं खलु श्रीसुन्दरराजाचार्यः समयवैयर्थ्यं किञ्चिदप्यसहमानः पितरमनुज्ञाप्य प्रस्थितः पादचार्येव वसुतातनगरीं प्राप्य तत्र तत्संस्थानमहापण्डितं कविकेसरिबिरुदाङ्कितं श्रीमन्तं स्वामिदीक्षितवरेण्यं प्राप्य व्याकरणशास्त्राभ्यासाय तमर्थयन्नवन्दे। तेन महात्मना 'तथे' त्यङ्गीकृतः सानन्दम्। स कविराडस्य मेधायै स्पृहयालुस्सत्स्वपि बहुषु शिष्येषु विशिष्यैनं कृपया संवर्धयन् तदेकपरायणोऽभूत्। स पण्डिताग्रणीः वल्लीपरिणयाख्यं चम्पुकाव्यं रचयन् तल्लेखनायैनं नियुयुजे। अथ मेधावी सुन्दरराजस्तदविज्ञातमेव वल्लीपरिणयस्य काञ्चिन्मनोज्ञां व्याख्यां निर्मायानन्तरं गुरुसन्निधौ विज्ञापयामास। स दीक्षितवरेण्यस्तदाकर्ण्य महानन्दाब्धिमग्नः परिष्वज्यैनं 'वत्स! उत्तरोत्तरं वाग्विलासो भूयात्ते। त्वमेवाहमहमेव त्वं' इति बहुधोद्घुष्य व्याख्यया तया सह वल्लीपरिणयं मुद्रयामास। तदारभ्य तत्संस्थानपण्डितसभायां स्वस्थाने एनमध्यारोपयामास। तदानीं तत्र महीपालपदमारूढः बहुभाषावेदी महाराजराजपूजितः वेङ्कटेश्वर एट्टप्पमहाराजः श्रीमतोऽस्मदाचार्यादलङ्कारशास्त्रमभ्यस्य अद्यापि तत्र शास्त्रे अद्वितीयो विराजते। तदारभ्य तत्संस्थानमहीपतीनां तद्राजवंश्यानां चायं सुधीर्नेतायते स।

राजभिर्बहुधा पीनवसनकटकादिभिस्सम्मानितस्तत्र वसन् एकविंशे वयसि निजानुरूपया श्रीवेङ्कटलक्ष्मीनाम्न्या सुरूपया द्वैतीयीकाश्रममारुरोह। अचिरात्कन्यकामणिञ्च लेभे।

तस्यानुजातानां नामानि। श्रीकृष्णः, शेषाद्रिः, लक्ष्मीनारायणः, रामः, वासुदेवः, लक्ष्मीः, श्रीनिवासः, वेङ्कटाचलः इति। एतेषु द्वितीयः तुरीयः पञ्चमस्सप्तमश्च एकैकशास्त्रेषु निपुणाः तत्र तत्र राजपण्डिताश्चासन्। अन्ये लोकविज्ञानचतुराः धनधान्यपोषणचणाः सर्वेऽप्यग्रजाज्ञां शिरसा वहन्तः ऐकमत्येन स्वस्वदारादिभिः अभिन्नेव एकगृहे सुखिनोऽवसन्।

इत्थं भुवनविख्यातः श्रीसुन्दरराजाचार्यः पित्रोपदिष्टं श्रीमारुतिमन्त्रं विधिवज्जपन् अतित्वरितमेव पवननन्दनकरुणालहरीसंवर्धितः सीतालक्ष्मणहनुमत्समेतं श्रीरामचन्द्रविग्रहं भक्त्या परमया यथाविध्याराधयति स्म। श्रीमान् पावमानिरेतदाराधनसन्तर्पितः स्वप्ने जागरे दीपज्वालायां वाऽऽविर्भूयास्मै कालत्रयवार्तां साक्षान्निगदति स्म। भूतप्रेतादयः सुन्दरराजाचार्य-नामश्रवणमात्रेण पलायन्तेस्म। इत्थं द्वितीयमिव कालिदासं सुधीवरेण्यं पार्थसारथिनामा कश्चित् ( कलेक्टर् ) प्रभुः श्री शङ्करालयनिकेतनः पट्टयापुरीनाथाय निवेद्य संस्कृतभाषाभ्या-साय स्वनिकटमानीय द्वित्रिवर्षाण्यभ्यस्यन् गैर्वाणीभाषायामतिनिपुणः कविरप्यासीत्।

कदाचित्प्रभुनिकटात्स्वपुरीं प्रति प्रस्थितः अनुजलक्ष्मीनारायणसहितः आरूढशकटोऽस्म-दाचार्यः मध्येमार्गं निशीथिनीप्रथमयामे चोरैरावृतेऽस्मि, शाकटिके पाचके च वेपमानाङ्गे, अञ्जनानन्दनं साञ्जलि प्रार्थयति स्म। सद्यश्शकटं परितः दीपदण्डचतुष्टयमदृश्यत परमोज्ज्व-लम्। सद्यः पलायिताश्चोराः। द्रुतं प्रचलितं शकटम्। दीपदण्डा नैनाग्रहारावध्यदृश्यन्त। तत्रान्तर्हिता अभवन्। स्वपुरं प्राप्य महात्मा अनुगतैर्वृत्तमेतदद्भुतं बन्धुभ्योऽकथयत्। सर्वेऽप्याकर्ण्यानन्दाब्धौ मज्जन्ति स्म।

इत्थं भुवनभागधेयपरिणामाऽस्मदाचार्यवर्यप्रभावं कर्णाकर्णिकया निशम्य श्रीशालि-वाटीनगरप्रधानप्राड्विवाकवरेण्यः मूर्तिमानिव सुगुणसमुदायः औदार्येऽद्वितीयः बहुभाषावेदी कीर्तिमदग्रेसरः श्रीकृष्णस्वामिशर्मा प्रभुमणिः स्वनगरीमेनमानाय्य देवभाषावर्धनायाऽऽचार्यं वव्रे। तं सुधीरङ्गीकृत्य शिष्यपदे अचिरादेवान्तेवासिनं सर्वशास्त्रमर्मवेदिनं चक्रे। तत्र निवसन्नेव कविमणिः श्रीकृष्णार्याशतकं श्रीरामभद्रविजयचम्पुकाव्यं श्रीवैदर्भीवासुदेवनाटकं च प्रणिनाय। एते ग्रन्थाः निर्माणानुक्षणमेव श्रीकृष्णस्वामिप्रभुवरेण मुद्राप्य प्रख्यापिताः। तदन्तरा प्रभुमणिरयं स्वयं प्रश्नोत्तररामायणं बालनीत्याख्यग्रन्थद्वयञ्च निर्मायास्मत्कविमणिना परिष्कृत्य मुद्रितवान्। किञ्च स्वायत्तैः राजभिः प्रभुवरेण्यैश्च महात्मानमेनं बहुमानयामास।

एवं शालिवाटीपुरी शाखानगर कैलासपुरमधिवसति वरदराजनन्दने श्रीलक्ष्मी-राज्ञीप्रियनायकः श्रीकेरलवर्मदेवः कविकुलसार्वभौमः श्रीहंससन्देशाख्यं चम्पुकाव्यं निर्माय स्वप्रियमित्रमणये श्रीकृष्णस्वामिप्रभवे प्रैषयत्। तद्विज्ञायास्मदाचार्यः तस्य व्याख्यां काञ्चिन्निर्माय स्वान्तेवासिने ज्ञापयामास। स तु तदैव सामोदं व्याख्यया तया सह ग्रन्थवरं केरलवर्मदेवाय भूयो व्यजिज्ञपत्। स कुशाग्रधीर्देवः निरीक्ष्य व्याख्याचातुर्यं सद्यः प्रहर्षातिशयेन स्वसंस्थानान्तर्गताय सुन्दरकवये महान्तं पारितोषिकं प्रादात्। अपि च निजोत्तममैत्रीसाम्राज्य-निरूपकपत्रिकारत्नेन सहानतिचिरादेव नागरलिपिमुद्रितकंसवधचम्पुकाव्यस्य शतं पुस्तकानि च प्रेषयामास।

एवमतीतेषु द्वित्रवत्सरेषु चेन्नपट्टणनिवासी तिरुनेल्वेलिजिल्ला कलेक्टर् पदवीविराजमनः आनरबुल् रामराव् तनूभवः वरदरायाभिख्यः द्वाविंशवयस्कः कश्चित् प्रभुमणिः श्रीकृष्णस्वामिप्रभुदर्शनायागत्य तत्र सम्भाषणावसरे सन्निहितं कवीन्द्रं स्वस्य गीर्वाणभाषापोषणायार्थयामास। तदर्थनां 'तथे' त्यङ्गीकृत्य न्यवेदयद्गुरवे। गुरुमणिस्तमूरीकृत्य शिष्यपदे बहु वरदरायसमाराधितः तेन प्रभुणा तत्र तत्र सञ्चरन् तस्य पाश्चात्यमतानुसारेण स्वमतानादरतां विज्ञाय स्वसन्निधिमहिम्ना अचिरादेव तमुत्तमवेदवित्तमं स्वमतवर्धनोद्युक्तं संस्कृतभाषासारज्ञं कविमणिं भगवदारधननिरतञ्च कारयामास। एवं परमधार्मिकभूतरत्नकुमारवरदरायालोकनाय स महात्मा रामरायस्समागत्य वीक्ष्यैतादृशं पुत्ररत्नं परमानन्दमग्नः सन्निहितमाचार्यं प्रति 'ननु सुन्दरराज कविराज! अस्मत्कुलमुद्धृतं त्वयैव' इति प्रणम्य बहुधा स्तुत्वा सकुमारं शास्त्रिवरेण्यं चेन्नपुरीं नयन् तत्र बहुधा सम्मानयामास। तदन्तरा कविमणिरचितं हनूमद्विजयनाटकञ्च आन्ध्रलिपिभिः मुद्रापयामास।

तत्र मासमेकं चिरायति कविसिंहे कदाचिद्वरदरायप्रभुः स्वजनन्यास्स्वप्रियकान्तायाश्च अचिरादकारणविग्रहं आचार्याय विज्ञाप्य एतन्निरूपकः कश्चिद् ग्रन्थोऽवश्यं कर्तव्य इति सम्भाषणान्तरे जगाद। तदा उदासीन इव कविमणिः दिनद्वयादर्वागेव स्नुषाविजयाख्यं बहुलोकपरिज्ञाननिरूपकं नाटकं निर्माय प्रभवे न्यवेदयत्। स महाविस्मयानन्दपरवशः स्वपित्रादिभिस्सह समग्रं रूपकमाकर्ण्य गुरोस्सर्वज्ञतां तत्र तत्र प्रख्याप्य क्षिप्रं ग्रन्थलिपिभिः मुद्राप्य स्नुषविजयरूपकं उपचकार भुवनमण्डलाय।

अथ स्वपुरीं प्राप्य गुरुः कञ्चित्समयं वसन् पद्मिनीपरिणयाख्यं नाटकमिदं नीतिरामायणाख्यं श्रीरामभद्रस्तुतिशतकाव्यञ्च ग्रन्थद्वयमरचयत्।

तदानीमनन्तशयनसंस्थाने श्रीविशाखमहाराजतुलाभारमहोत्सवः प्रवृत्तः। तत्र रामस्वामिशास्त्रि केरलवर्मदेवादिभिः पत्रमुखेनाहूतः श्रीमदाचार्यः स्यानन्दूरपुरीं प्राप्य तत्र राजकीयप्रभुभिर्गुरुभिश्च बहुधा सत्कृतः प्राप्योत्तमसम्भावनां श्रीवञ्चिराज्ञीप्रियतममुखेन साक्षान्महाराजदर्शनायायतत। राज्ञा चाङ्गीकृतकेरलवर्मदेवनिवेदनेन निजदर्शनाय निर्दिष्टघण्टायां राजदूतैराहूतः गुरुमणिः प्रासादमारुह्य एकान्तवर्तिनं केरलचक्रवर्तिनं समर्यादं सविनयं प्रतीक्षमाण आस्त। सद्यो नृपालकविमणिः भावुकप्रश्नात्परं 'ननु कविमणे!

'दधार मूर्ध्ना गिरिशं शशाङ्कः'

इति समस्यामदात्। राजाज्ञोत्तरक्षण एव सुंदरकविरुत्थाय

'पुरा पुराणां त्रितयं विजेतुं हरे समारुह्य महीरथाङ्कम्।
सूर्येन्दुचक्रं कुतुकात्प्रयाति दधार मूर्ध्ना गिरिशं शशाङ्कः'॥

इति समस्यामापूर्य विज्ञापयामास । राजेन्द्रः अतिसमीचीनमिति स्वाशयप्रकाशकसमस्या-पूरणं सशिरःकम्पमुररीकृत्य सत्वरं सर्वाधिकारिसमानीतोत्तमकटकपीतवसनादिभिः स्वयमेव कविमणिमलङ्कृत्य एकविंशतिनिष्कप्रमाणसुवर्णद्रव्यादिभिश्च सत्कृत्य स्वमैत्रीमजहतं प्रतिश्रुत्य वार्षिकसत्कृतिञ्चोपसृत्य सादरं स्ववासनिकेतनाय अनुमन्यते स्म ।

राजप्रासादात्कविमणिसमागमं प्रतीक्षमाणाः श्रीरामस्वामिशास्त्रिगुरुमणि (जड्जि) प्राड्विवाक सीतारामप्रभुवर केरलवर्मदेवादयः संकरावलम्बं सुन्दरराजसूरिं सम्मानयन्तः कवि-मणिकृतसमस्यापूरणपरिपाटीञ्च शृण्वन्तः सकरघोषं श्लाघमाना मुमुदिरे ।

अथ कविराजः यथार्हं प्राप्तसम्मानेन लक्ष्मीनारायणाख्यकनिष्ठसहोदरेण स्वपुरीं प्राप्याववर्तत सुखी ।

पश्चात् कृष्णस्वामिप्रभुप्रहितपत्रिकया रामनाथपुरसंस्थानं प्राप्य तत्र महात्मना सेतुपति महाराजेन श्रीकृष्णस्वामिप्रभुसाचिव्येन प्रवर्तिते श्रीनवरात्रमहोत्सवे नानादिग्भ्यः समागतानां नानाशास्त्रप्रवीणविद्वन्मणीनां परीक्षाधिकारिपदे समादिष्टः सादरमस्मदाचार्य-वरेण्यः । तत्र च तदा समागताः सुधीमणयः तत्र तत्र शास्त्रे कविमणिना परीक्षिताः राज्ञा यथार्हं बहुमानिताश्चाभूवन् । तदा हि दैवज्ञा अमुं वराहमिहिरं शास्त्रप्रवीणं अथ ज्योतिर्भूषणं द्राक्षात्मानं, आलङ्कारिकाः दीक्षितमथ रससारं जगन्नाथं, वैयाकरणाः नागेशं अथ शब्दब्रह्माणं पतञ्जलिं, आगमज्ञाः सुन्दरराजं अथ वृषधररसिकं श्रीनिवासं, नीतिविदो भाष्यकारं, गायकाः तन्मर्मज्ञं, मन्त्रज्ञा मन्त्रमूर्तिं, मतसूक्ष्मदर्शने बोधने वा वाचस्पतिं, समाघोषयन्तः अनुमोदन्ते स्म । एवमापरिसमाप्तेर्नवरात्रमहोत्सवस्य तत्र वसन् महात्मा कस्यांचिद्रात्र्यां तत्र महासभायां निजविरचितश्रीवैदर्भीवासुदेवनाटकदितीयतृतीयाङ्क-प्रसङ्गेन सर्वान् जनान् सम्मोदाम्भोनिधौ न्यमज्जयत् । तदा सर्वज्ञकेसरिणा सेतुपतिमहाराजेन निजनामाङ्कनप्रत्युप्तगारुत्मताश्मना कटकेन सोत्तरीयोत्तमपीताम्बरेण रूपिकापञ्चशत्या च बहु-मानितोऽजनि । तथा यथायोगं लक्ष्मीनारायणसुधीश्च । अथ सुधीविश्लेषासहेन महाराजेन कृच्छ्रात् कृतनिदेशः कृष्णप्रभुणा च दत्तानुमतिः निजनगरीं कुशली प्राप । अथ स्वग्रामे प्रतिष्ठितकृष्णालयं पलालच्छन्नं प्रस्तरसुधेष्टकादिभिः स्थिरीचिकीर्षुः तत्र प्रयतमानः अचिरादेव स्वार्जितद्रव्यैः भगवदालयकैङ्कर्यौद्योगं यथायोगं समापूर्य तत्र सोत्सव-बिम्बाचार्यविग्रहप्रतिष्ठाञ्च कुर्वन् आत्मनः कृतकृत्यतामापादयामास ।

तदानीं खलु विक्टोरिया चक्रवर्तिन्याः षष्ट्यब्दपूर्तिमहोत्सवः सर्वतः प्रवृत्तः । महोत्सवे पेङ्काट्टै नगर महासभायां सुधीवरेण्यैः कृतो लोकोत्तरः प्रसङ्गः । तदा कविमणिकृतप्रसङ्गदिवाकर-प्रभासु सभासु सर्वत्र अन्येषां वाग्धोरणी दिनदीपायते स्म । अथ द्वित्रदिनेभ्यः परं शालिवाटी-

नगरीं प्रति स्वीयानसा प्रस्थिते भक्ताग्रेसरे त्रियामाद्यमघण्टायां पावूर् नगर निकटमनुप्राप्ते पाटच्चराः त्रयः शकटं परीत्य सन्तर्ज्य सारथिं स्थिताः। अथ सम्भ्रान्ताः सर्वे साधुमुख्यसमीपे त्यक्तस्वाधिकाराः स्तम्भवत् निश्चलास्तिष्ठन्ति स्म। तदा खलु महानयं आञ्जनेयः सहाय इति उत्थायावतीर्यानसः 'मा भैष्टे'ति स्वीयान् समाधाय स्वयमेव अवमुच्य कर्णभूषणे पेटिकान्तस्थैकविंशतिरूपिकाः शङ्कराचार्यसम्मानितपीतवसनपट्टञ्च चोरेभ्योऽदात्। सर्वं सविनयं गृह्णन्तस्ते पूजापेटिकायाः श्रीरामचन्द्रविग्रहमपि गृहीत्वा पलायनप्रवृत्ताः अनतिदूरे पुरतः भीमं किञ्चिद्रूपं साक्रन्दमालोक्य तदा वेपमाना 'नास्मान् जहि! नास्मान् जहि! सर्वं भूयो भक्ताग्रगण्याय समर्पयामः, समस्तापराधान क्षमस्व' इति प्रार्थयन्तः पुनरपि शकटान्तिकमागताः भगवद्विग्रहादर्शनमात्रखिन्नसुधीपुङ्गवचरणयोस्साष्टाङ्गं नमन्तः 'स्वामिन् सर्वं पुनः गृह्यतां अस्मानाशिषा योजयस्व। रक्ष रक्षास्मान् अन्तिकस्थभीमरूपा'दिति घुष्यन्तः विग्रहादिकं दिशन्तः पथि परीत्यावर्तन्त। विखनःकुलीनभागधेयभूतोऽसौ तान् करुणार्द्रदृशा पश्यन् विग्रहमात्रं स्वीकृत्य अन्यत्तेभ्यो वितीर्यताननुगृह्णन् सानन्दं प्रेषयित्वोद्दिष्टनगरीं प्राप्य कृष्णस्वामिप्रभवे त्रियामावृत्तं कथयामास। प्राड्विवाकाग्रिमः विस्मयाविष्टः उत्तमभक्ताग्रिमप्रभावं स्वतस्सिद्धौदार्यगुणञ्च सर्वलोकविख्यातमकरोत्पत्रिकामुखेन। कार्यगौरवेण भूयस्स्वनगरमाजगाम कविमणिः।

आचार्यवर्यः पञ्चाशता वयसा पूर्णोऽभूत्। तथा हि। वैखानसकुलोद्धारणे निरन्तरजागरः शमादिगुणगणभूषणः धरातलं पुनरवतीर्णो विखनोमुनिरिवोज्ज्वलत्पूर्वैदिकेनसुपथा सञ्चरमाणानां सुलभसमीचीनमार्गदर्शी सततं वासुदेवसङ्कीर्तनेन वासुदेवभट्टाचार्य इति विख्यातः तञ्जै-संस्थानान्तर्गत-कोनेरिराजपुरी-निकेतनः श्रीरघुनाथभट्टाचार्यः चिरं श्रवणपथसञ्चरमाणकीर्तिमात्राकर्णनकौतुकाविष्टः श्रीसुन्दरराजकवीन्द्रालोकनाय पत्तलूपुरीं (इलत्तूर्) आगत्य स्वागमेनात्रत्यान् पावयति स्म। उभौ विखनःकुलीनमणी अन्योन्यदर्शनानन्दसुखमन्वभूताम्। अथ स्वमतोद्धरणबद्धलश्रद्धौ ज्ञानवयःकलाकीर्तितेजोऽभिवृद्धौ तालपत्रमात्रवर्तिस्वमतग्रन्थमुद्रणाय प्रवृत्तौ एतौ भक्तौ नानादेशेभ्यः पत्रश्रीवैखानसग्रन्थरत्नानि समानीय काकलेषु विलिख्य विशदमारोपयामासतुर्मुद्रायन्त्रे। अचिरादेव प्रकटयामासतुश्च तत्र तत्र। इतः पूर्वं प्रयतनाभावाद्विखनःकुलीनभवनपेटिकासु निद्रितेषु श्रीमत् दीक्षितीय श्रीवैखानसमहिममञ्जरीमोक्षोपायप्रदीपिका प्रभृतिषु बहुषु ग्रन्थवर्येषु तदा हि श्रीवासुदेवभट्टाचार्यसाह्येन श्रीसुन्दरराजसुधीवर्येण परिष्कृत्य मुद्रितेषु तदैव श्रीवैखानसकल्पलतिका कुसुमितेवासीत्। अथ परतत्त्वनिरूपणशास्त्रवैयासिकवेदान्तशास्त्रभाष्यकारेषु विहितलोकोपकारेषु श्रीशङ्करगुरुवर्यादिषु महामहिमसु गणनीयेन श्री श्रीनिवासदीक्षितेन्द्रेण सर्वतन्त्रापरतन्त्रेण श्री श्रीनिवासापरावतारेण सानुग्रहं विरचितस्य श्रीलक्ष्मीविशिष्टाद्वैतभाष्याभिधानश्रीवैखानसमतानुयायिवैयासिकसूत्रभाष्यस्य तत्र तत्र गभीरगूढाशयप्रकाशिकां निगमचूडादर्पणाख्यां काञ्चिद्व्याख्यां निर्माय

सुन्दरकविसार्वभौमः एतन्मुद्रणाय प्रवृत्तः नानादेशेषु सञ्चरन् श्रीवेङ्कटगिरिप्रभृतिषु महापुरीषु सम्मिलितासु विद्वत्सभासु श्रीश्रीनिवासदीक्षितीयभाष्याशयं गर्भचक्राङ्कनमहिमानञ्चाघोष्य तादात्विकसर्वशास्त्रमर्मवेदिभिर्निगमागमप्रवीणैः वेदान्तार्णवनिष्णातैः सहृदयशिरोभूषणैः श्रीवैष्णवस्मार्तसम्प्रदायप्रवर्तकैर्बहुभिः सुधीमणिभिः सामोदं वितीर्णबहुविधानुमोदनगद्यपद्यप्रकटीकृतसमेधमानमेधाविलासः श्रीवेङ्कटगिरिमारुह्य तत्र पद्मासहायचरणनलिनसेवया सार्थयन्नात्मानं तदाराधनपरमभागधेयभावितात्मभिः श्री श्रीनिवासदीक्षीतसत्कुलीनश्रीशेषाद्रिदीक्षितप्रभृतिभिः सत्कृतः महात्मभिस्तैर्लक्ष्मीविशिष्टाद्वैतभाष्यमुद्रणाय सद्यःसमर्पितरूपिकासहस्रः तदानीमेव वासुदेवार्येण चेन्नपुरीं प्राप्य आन्ध्रग्रन्थलिपिद्वयेन कलेक्टर्—वरदराजाभिधेयस्यानुमतेन सहसा मासादर्वागेव श्रीभाष्यं निरवद्यं मुद्राप्य सानुमोदनं सर्वत्र प्रख्याप्य पूर्वं कुसुमितां श्रीवैखानसकल्पलतिकां सञ्जातबहुपक्वफलां सर्वलोकस्पृहणीयाञ्च सम्भावयन् कविनासाम्राज्यसिंहासनमारुह्य बभाति स्म विजयी नितराम् ।

इत्थं समुद्धरन् स्वकुलीनान् विविधग्रन्थमुद्रणेनास्मदाचार्यवरेण्यः अथ कविरत्नावलोखनि स्वपुरीं प्राप्य अचिराद्वयसा षष्टितमेन पूर्णषष्टिहायनगजराजवत् सम्मदश्रीविराजमानः सम्मन्त्र्य सहजातैः श्रीकृष्णमन्दिरप्रतिष्ठित श्रीविखनसाचार्यसन्निधौ श्रीभगवदाराधनरूपेण प्रपदनरूपेण च षष्ट्यब्दपूर्तिमहोत्सवं निर्वर्त्य अन्नदानस्वर्णदानादिभिः सन्तोष्य भूसुरान् सर्वत्र धन्योऽभूत् ।

एवं हि षष्ट्यब्दपूर्तेः परं वर्षत्रयादर्वाक् नैजजन्मप्रयोजनैः पूर्णोऽसौ चिरादविभक्तान् स्वसोदर्यसहृदयान् यथार्हं स्वीयार्जितपशुगृहारामकेदारधनकटकवसनादिभिः साधु सन्तोषयन् तदारभ्याजस्रं समुल्लसमाननैजमानसारविन्दे प्रतिष्ठाप्य परमात्मानं परमानन्दभरितः समर्प्य नैजभरं सर्वस्वामिने पुरतश्च तादृग्रूपप्रादुर्भावमेव भावयन् जीर्णां त्वचमिवोरगः स्वेच्छया पाञ्चभौतिकतनुत्यागाय जातामोदः उत्तमसमयप्रतीक्षी श्रीरामभद्रेति तारकनामैव सन्ततधारया समुच्चरन् योगधारणामहिम्ना तत्तादृगानन्दमयं सम्यग्विशन् कदाचित्समये सर्वतः श्रीकान्तनामसङ्कीर्तनपरेषु आबालवृद्धं बहुषु जनेषु प्रादुर्भवत्युदयगिरेः सहस्ररोचिषि धीरोऽयं सर्वान् यथार्हं समाभाष्य आत्मना सुचिरं समाराधितश्रीरघुवीरादिविग्रहानयनाय लक्ष्मीनारायणसोदर्यमाज्ञापयामास । 'तथे'ति स्नातेन तेन त्वरयाऽऽनीतं श्रीरामादिहनूमद्विग्रहान्तमेकैकमञ्जलिनाऽऽदायाऽनन्दाश्रुणाऽभिषिच्य पश्चान्मानसिकसर्वोपहारैः समाराध्य भूयश्च बिम्बानि भगवदालयप्रवेशनायादिदेशानुजन्मानम् । तथा कृते अयं महात्मा 'अच्युतानन्द गोविन्दे'त्युच्चरन्नेव विलसन्मुखः विस्मयमान इव पुरतः निर्जल्पितरूपदर्शनेन त्यक्तैहिकतुच्छानन्दः परमभक्तालोकमात्रसाधारणं परमपदे सनकादियोगिवरसमाजं स्वयमुत्तमव्योमयानेन प्रविश्य उद्दीप्तभगवल्लाञ्छनः अद्यापि विराजतितराम् ।

शुभकृदुत्तर एष महान् गुरुः जगति कीर्तिकलेबरमेधयन् ।
अभजदर्जुनमित्रमणेः पदं परमवाप्तचतुर्थवरेप्सितः ॥

( विवरणम् ) अनेन श्लोकेन परमपदप्रवेशवत्सरादि सूच्यते । यथा, शुभकृदुत्तरेत्यनेन शोभकृद्वत्सरः सूच्यते, उत्तर इत्ययनं, गुरुरिति वासरः, अर्जुन इति शुक्लः पक्षः, मित्र इत्यनूराधानक्षत्रम् , चतुर्थ इति तिथिश्च, इत्येते सूच्यन्ते । अन्योऽर्थः स्पष्टः ।

इति श्री वरदराजसूरिसङ्गृहीतः श्रीसुन्दरराज कविराजजीवितसङ्ग्रहः ।

ये सन्त्यत्र धरातलेऽद्य सुधियो गर्भाङ्कनार्या जनाः
श्रीवैखानससन्मेतन्दुविजयाधानाय बद्धादराः ।
एते ते सुमवीन्द्रसुन्दरकविश्रेष्ठांशजाताः क्षितौ
नैजाभीष्टयुजो जयन्तु गुरुकारुण्येन संवर्धिताः ॥

इति,

वरदराजः
अनन्तशयनसंस्थानाश्रितः

इलत्तूर्,
15—8—1908.

॥ श्रीः ॥

# ॥ श्रीपद्मिनीपरिणयकथासङ्ग्रहः ॥

---

कासारो नाम राजाऽसीत्पद्मिनीति तनूभवा ।
तस्याभूत्तनयो राज्ञः कुमुदाकर इत्यपि ॥ १ ॥

दृष्ट्वोदयधराभिख्यराजपुत्रस्य पद्मिनी ।
भास्करस्याकृतिं चित्रे तस्मिन् भेजे रतिं स्वयम् ॥ २ ॥

कुमुदाकरनामा तु सुधाकरसुताकृतिम् ।
चित्रे विलोक्य रक्तोऽभूत् कौमुद्यां नाम योषिते ॥ ३ ॥

मत्तेभो नाम दुर्बुद्धिः कौमुदीं स्ववशेऽकरोत् ।
स्वपुत्रस्य कृते बालां नीत्वा स्वनिलयं स्वयम् ॥ ४ ॥

( जीमूतो नाम दुर्मेधाश्चकमे पद्मिनीं स्वयम् )
स्निग्धं कासारभूमीशं ययाचे सचिवेन ताम् ।
हिमानीदयितः कश्चित् दुर्धीस्तुहिनमण्डलः ॥ ५ ॥

मत्तेभस्य सखा वश्यः पद्मिनीं हर्तुमुद्यतः ।
एतत्सर्वं समालोच्य कासारो व्याकुलीभवन् ॥ ६ ॥

योगिनं शारदानन्दं पुत्रयोरिष्टसिद्धये ।
अवृणोल्लग्नकं प्राप्य काशस्तम्बाख्यशिष्यकम् ॥ ७ ॥

स तूदयधरं प्राप्य 'त्वत्पुत्रं भास्कराह्वयम् ।
अभ्यासये धनुर्विद्या'मित्युक्त्वा शिष्यमातनोत् ॥ ८ ॥

कासारपुरमानीतो गुरुणा तेन भास्करः ।
तत्र यातां तमोऽभिख्यां जीमूतेन प्रचोदिताम् ॥ ९ ॥

आवरीतुं तदात्मानमुद्यतां भास्करोऽवधीत् ।
कासाराय ददौ पूर्वं प्रसन्नश्चन्द्रशेखरः ॥ १० ॥

अन्तःस्थरत्नं मुकुलं व्याजहार च तं नृपम् ।
'येनेदं मुकुलं स्पर्शात् क्रियतेऽत्र विकस्वरम् ॥ ११ ॥

विद्धि तं वैष्णवं धाम जामाता स भवे'दिति ।
स तन्मुकुलमादाय शारदानन्दसन्निधौ ॥ १२ ॥

न्यधाद्गुरोर्गिरा तस्मिन् गृहीते भास्करेण तु ।
करेण भिन्ने मुकुले मणिमादाय संयमी ॥ १३ ॥

ज्ञात्वाऽस्य महिमानं 'ते दास्या'मीति मणिं दधौ ।
कासारेणाहृतस्तत्र भास्करोऽरुणसंयुतः ॥ १४ ॥

उद्यानमन्दिरेऽवात्सीद्दासीदासोपलालितः ।
कदाचित्पद्मिनी सार्धं सख्या भ्रमरिकाख्यया ॥ १५ ॥

उद्यानमध्यमगमद्विरहार्तिनिपीडिता ।
भास्करो विचरंस्तत्र दृष्ट्वा तां पादपावृतः ॥ १६ ॥

भूत्वा तस्थौ वयस्येन स्वस्मिन् तस्या विदन् रतिम् ।
यन्त्रव्योमगयानेन तदा तुहिनमण्डलः ॥ १७ ॥

ध्वंसितुं पद्मिनीं यातो हिमान्या सह भार्यया ।
तं दृष्ट्वा चकितां तन्वीमाश्वास्य नृपनन्दनः ॥ १८ ॥

गोभिस्तं न्यवधीत्पापं रिपुं तुहिनमण्डलम् ।
प्रतिजज्ञे हिमानी सा 'यतः पद्मिनि ते कृते ॥ १९ ॥

हतो मे वल्लभस्तस्मात्त्वां हनिष्याम्यह'न्त्विति ।
स योगी शारदानन्दः पद्मिन्या इष्टसिद्धये ॥ २० ॥

उपदिश्य श्रियो 'मन्त्रं जपन्ती श्रियमर्चय' ।
इत्युक्त्वाऽथ पुरं प्राप्य मत्तेभस्य तु कौमुदीम् । २१ ॥

आहूय तामुवाचेदं त्वन्मनोरथसिद्धये ।
'दिव्यां प्रतिकृतिं दद्यामस्पृशत्यर्चयाद्य ताम्' ॥ २२ ॥

इत्युक्त्वा पद्मिनीरूपां प्रतिमां स्पर्शमात्रतः ।
समीपवर्तिसंहर्त्रीं कृत्वोपायेन तां ददौ ॥ २३ ॥

कौमुदी प्रार्थयन्ती सा कुमुदाकरसङ्गमम् ।
मन्त्रेण योगिदत्तेन प्रतिमां तामपूजयत् ॥ २४ ॥

योगी मत्तेभकं प्राह 'कौमुदीभर्तुरायुषे ।
मासत्रयं व्रते तिष्ठन् अनूढा तावद'स्त्विति ॥ २५ ॥

पद्मिनी स्वसखीं प्राह 'प्रतिमा काञ्चनी श्रियः ।
आरोप्य शिबिकां पूजागृहमानीयता'मिति ॥ २६ ॥

मधुव्रताख्यसख्या सा समालोच्याथ भास्करम् ।
आरोप्य शिबिकां सार्धं लक्ष्मीप्रतिमया रहः ॥ २७ ॥

पूजासद्म समानीय कश्चिल्लीनं ततान तम् ।
तदा सा पद्मिनी स्नात्वाऽपूजयत् लोकमातरम् ॥ २८ ॥

पूजान्ते निर्ययौ मन्दं वयस्याऽथ स भास्करः ।
उपसृत्य विविक्ते तां चित्ते चिरतरं धृताम् ॥ २९ ॥

स्वैरं व्यहार्षीदालिङ्ग्य श्रीलामदनमभ्यगाम् ।
अथ जीमूतमायान्तं विवाहाय सहानुगम् ॥ ३० ॥

कासारः शारदानन्दवचनादाह किञ्चन ।
'विवाहदिनमारभ्य मासत्रयमियं व्रतम् ॥ ३१ ॥

आचरेच्छ्रेयसे पत्युः तावन्न स्पृश्यता'मिति ।
तदङ्गीकृत्य जीमूतो विवाहायोपचक्रमे ॥ ३२ ॥

तदाऽऽह योगी कासारं मङ्गलावसरे तव ।
सुता लक्ष्मीगृहं गत्वा देवीं तां प्रणमत्विति ॥ ३३ ॥

तथा देवीगृहं प्राप पद्मिनी स्ववयस्यया ।
वयस्येन सहाऽगच्छत् स तत्र कुमुदाकरः ॥ ३४ ॥

रूपे कृतो व्यतीहारस्तयोरागतयोस्तदा ।
मिलिन्दं तद्वयस्यञ्च चक्र भ्रमरिकामिव ॥ ३५ ॥

पद्मिनीं भूमिसदने सह सख्या न्यवेशयत् ।
अरंस्त तत्र भीतेन भास्करेण प्रियेण सा ॥ ३६ ॥

तादृशो राजपुत्रस्य जीमूतो मूढधीः करम् ।
गृहीत्वाऽथ विवाहेऽस्मिन् निवृत्ते सह भार्यया ॥ ३७ ॥

स्वपुरं गन्तुमारेभे तदा योगी स्वयं रहः ।
कुमुदाकरमाहूय वयस्येन समन्वितम् ॥ ३८ ॥

ऊचे शत्रुजयोपायं तच्चेतसि निधाय तौ ।
प्रतस्थाते नीयमानौ जीमूतेन सकौतुकम् ॥ ३९ ॥

तत्पुरं प्राप्य रहसि व्रतं स कुमुदाकरः ।
आचरन्नङ्गनामूनुमुपास्ते स्म सुभक्तिमान् ॥ ४० ॥

सर्वाभीष्टप्रदं साधं सह सख्या सदा सुधीः ।
कदाचन विभावर्यामुपायं योगिनः स्मरन् ॥ ४१ ॥

बहिर्निर्गत्य तं वेषं निर्धूय कुमुदाकरः ।
द्वारं जीमूतगेहस्य प्रविश्याबोधयच्च तम् ॥ ४२ ॥

दौवारिकैः समागत्य स्यालं तं कुमुदाकरम् ।
स्वागतं सादरं पृष्ट्वाऽप्राक्षीदागमकारणम् ॥ ४३ ॥

'स आह तातो दुस्स्वप्नं पश्यन् दुहितरि स्वयम् ।
पापशङ्की प्राहिणोन्मां भगिनी प्रेक्ष्यता'मिति ॥ ४४ ॥

इत्युक्तस्तेन जीमूत ऊचे क्रोधसमन्वितः ।
'पद्मिन्यां पापमाधातुं कः शक्नोति मयि स्थिते' ॥ ४५

तमुवाच स जीमूतं 'न वक्तव्यं तथा विभो ।
चिरान्मत्तेभको हर्तुं रन्ध्रान्वेषी सहोदरीम्' ॥ ४६ ॥

इत्युक्तस्तेन जीमूतः प्रेयसीवसतिं ययौ ।
तत्र भ्रमरिकारूपी मिलिन्दः केवलं स्थितः ॥ ४७ ॥

न दृश्यते मे भगिनीत्यरोदीत्कुमुदाकरः ।
जीमूतः सुतरां रुष्टो मत्तेभपुरमागतः ॥ ४८ ॥

वयस्येन समं तत्र ययौ च कुमुदाकरः ।
निपात्य वज्रं जीमूतो मत्तेभं तत्र तं न्यहन् ॥ ४९ ॥

भ्रमन् भामोऽथ जीमूतः कौमुदीव्रतमन्दिरम् ।
अगमत्तं तु सा वीक्ष्य मत्तं भीता पलायिता ॥ ५० ॥

स मन्मथवशो मुग्धः पद्मिनीप्रतिमां दृढम् ।
आलिङ्ग्य च तदन्तःस्थयन्त्रनिक्षिप्त औषधैः ॥ ५१ ॥

उत्पन्नो ज्वलितो वह्निरधाक्षीत्तं दुराशयम् ।
दग्धोऽपि वह्निना तत्र जीमूतोऽसून्न चामुचत् ॥ ५२ ॥

कौमुदी सौधमारुह्य चरन्तं कुमुदाकरम् ।
वीथ्यां वीक्ष्य वयस्येन सह आहूय तं स्वयम् ॥ ५३ ॥

कञ्चिन्निगूढं विन्यस्य रेमे तेन दिवानिशम् ।
अवगम्य रहस्यं तन् मत्तमननयो बली ॥ ५४ ॥

कलभस्तं बलादृगृह्णन् हन्तुं प्रारभतानघम् ।
हिमानी तत्र साऽगत्य तमूचे कलभं वचः ॥ ५५ ॥

'भैरव्या द्राक् प्रसादार्थं व्रतमाचर्यते मया ।
अन्ते तस्यै बलिर्देयो युवा च युवतिर्मया ॥ ५६ ॥

निर्दिष्टा युवती काचित् युवाऽसौ दीयताम्'इति ।
तदङ्गीकृत्य कलभः कारावेश्मनि तं न्यधात् ॥ ५७ ॥

ततो मिलिन्दो वित्रस्तः स्वपुरं प्राप्य सत्वरम् ।
कासाराय स तत्सर्वं विस्तरेण न्यवेदयत् ॥ ५८ ॥

स शोचन् भास्करं साकं प्रियासहितमाह्वयत् ।
आयाति तस्मिन् प्रेयस्या हिमानीप्रेरितं महत् ॥ ५९ ॥

भूतं तां पद्मिनीं जह्रे तिरोभूतस्वरूपकम् ।
ज्ञात्वा तदपि कासारो व्यषीदन्नितरां जनैः ॥ ६० ॥

हिमानी भैरवीं कालीं ताभ्यां प्रीणयितुं द्रुतम् ।
आरेभे प्रथमं हन्तुं पद्मिनीं खड्गपाणिका ॥ ६१ ॥

उपासरत तदा लक्ष्मीं शरणं सा ह्यमन्यत ।
श्रीभक्तरक्षणे व्यग्रा द्रुतं तं भास्करं स्वयम् ॥ ६२ ॥

अनैषीत्तत्र स श्रीमान् खड्गे पतति तद्गले ।
आचकर्ष प्रियां शीघ्रं गृहीत्वा करयोर्द्वयोः ॥ ६३ ॥

हिमानी भास्करं दृष्ट्वा भीता दुद्राव सत्वरम् ।
भैरव्या क्रुद्धया सृष्टा बहवः फणिनोऽद्भुताः ॥ ६४ ॥

पश्यन्त्यां गगनं लक्ष्म्यामाविर्भूतः खगेश्वरः ।
तानभञ्जयदत्युग्रदंष्ट्राग्रेण महाजवः ॥ ६५ ॥

कासारपुत्रौ सन्दष्टुं प्रवृत्तान् विस्तृताननः ।
अथ सा भैरवी भीमं रक्षोगणमवासृजत् ॥ ६६ ॥

पश्यन्त्यां गगनं लक्ष्म्यामाविर्भूतः कपीश्वरः ।
राक्षसांस्तान् जघानाशु लाङ्गूलेन महामहाः ॥ ६७ ॥

भैरवी स्वयमेवैतान् भीमरूपा जिघांसया ।
अभिदुद्राव कारुण्यपरिपूर्णा हरिप्रिया ॥ ६८ ॥

हुङ्कारमातनोन्माता लोकानां भक्तरक्षिणी ।
तस्या हुङ्कारतो भीता भैरवी भक्तवत्सलाम् ॥ ६९ ॥

प्रणम्य प्राह 'देवेशि मन्तुमें क्षम्यता'मिति ।
देवी प्रसन्ना तां प्राह भैरवीं हरिवल्लभा ॥ ७० ॥

'इमान् विमानमारोप्य भूतैः शीघ्रं तवाधुना ।
नय कासारनगरं न व्यथेरन्यथा तथा' ॥ ७१ ॥

इत्युक्ता भैरवी तस्या अङ्गीकृत्य मुदा वचः ।
पद्मिन्या भास्करं सार्धं कौमुद्या कुमुदाकरम् ॥ ७२ ॥

व्योमयानं समारोप्य निन्ये कासारमन्दिरम् ।
कासारः शारदानन्दयोगिना सह हृष्टधीः ॥ ७३ ॥

पुत्रीं भर्त्रा समायुक्तां पुत्रं भार्यासमन्वितम् ।
दृष्ट्वा कुतूहली भेजे लोकानां जननीं श्रियम् ॥ ७४ ॥

रामस्य रविवंश्यत्वात् भास्कराख्या खलूचिता ।
लक्ष्म्याः सीताविवर्तायाः पद्मवत्त्वाच्च सन्ततम् ॥ ७५ ॥

पद्मिन्याख्या तथा युक्ता तादात्म्यात्तयोस्तयोः ।
चित्ते निधाय वैदेहं कासाराभिन्नरूपिणम् ॥ ७६ ॥

जीमूतं रावणाभिन्नं शारदानन्दयोगिनम् ।
कौशिकाभिन्नमेवात्र नाटके सुमनोहरे ॥ ७७ ॥

रामायणकथां प्रायः कविरस्मिन्नसूचयत् ।
तथा हि ताटकावृत्तं तमोऽभिख्यामधात् स्फुटम् ॥ ७८ ॥

पद्मभेदेन कथितं शिवचापस्य भञ्जनम् ।
एवं सुधीभिरुन्नेया कथाऽन्यापि रघुप्रभोः ॥ ७९ ॥

इति
**वरदराजनिर्मितः कथासङ्ग्रहः**
श्रीरामदूताय नमः

॥ श्रीवेङ्कटेशपरब्रह्मणे नमः ॥

# ॥ श्रीपद्मिनीपरिणयाख्यं प्रकरणम् ॥

श्रीसुन्दरराजमहाकविविरचितम्

## प्रथमोऽङ्कः

गीर्वाणावलये सुधां वितरितुं दैत्यान् विमोहाङ्गना-
रूपं प्राप्तवतः पुराणपुरुषस्यालोकयन्त्या मुहुः ।
सभ्रूभङ्गमपाङ्गवीक्षणभवानङ्गागमप्रक्रियं
वक्त्रेन्दुं कलशाम्बुराशिदुहितुर्मन्दस्मितं पातु वः ॥

अपि च, दशवदननगर्यां स्निग्धगन्धद्रुक्लृप्तात्
भवनवलभिवर्गाद्दालसङ्क्रान्तवह्नेः ।
उदितसुरभिधूमैर्वासयन् व्योमभामा-
कचततिमतिवीरः पातु कश्चित्प्लवङ्गः ॥ २ ॥

(नान्द्यन्ते) सूत्रधारः—(पुरोऽवलोक्य) अहो ! भगवत्या गोदामिधायाः कैटभपरिपन्थिप्रणयिन्याः संमिलन्ति नानादिगन्तनिवासिनः सज्जनाः मज्जनमहोत्सवसिषेविषया विषयान्तरमुत्सृज्य । (सौत्सुक्यम् अञ्जलिं बद्ध्वा)

श्री धन्विनव्यपुरवासिनि देवि गोदे !
श्रीशार्ङ्गि दिव्यगुणसूक्तिधृतप्रमोदे ! ।
त्वन्मज्जनोत्सवभवे विभवे न धत्ते
कस्सज्जनः कुतुकमम्ब निलिम्पवन्द्ये ॥

(आकाशे श्रोत्रं दत्वा) किमादिश्यते साधुपरिषदा ? रे रे ! कुशीलव !

हस्तविन्यस्तहैणोक्तिपुस्तकैरावृते जनैः ।
इह सद्रूपकं प्रत्नं द्रष्टुमिच्छा वृथा हि नः ॥ इति ॥

न वृथा भवतामिच्छा । विद्यत एवाभिनवं सत्प्रकरणम् । किं ब्रूथ ? कुतूहलिनःस्मः तदवलोकन इति । (सहर्षम्) अचिरादभ्यस्तस्य अभिनवरूपकप्रयोगस्य सफलतासम्पादनाय

रसिकपरिषदमभिलषतो मम प्रतिपद्यते विधिरनुकूलताम्। (नेपथ्याभिमुखमालोक्य) इतस्तावत् भावः। (प्रविश्य)

**मारिषः**—एषोऽस्मि।

**सूत्रधारः**—भाव! पश्यतु भवान् नानादेशेभ्यः समागतानिह महानुभावान्।

**मारिषः**—आर्य! अदृष्टचरो भवत्येतावान् क्वचन साधुसमागमः।

**सूत्रधारः**—भाव! श्रूयतामत्र कारणम्।

पङ्क्त्याऽभियोज्य रमणीयतराण्यनांसि
तन्वन्ति केऽपि पुरतोऽग्निजलप्रयोगम्।
आरुह्य तानि जनता घटिकाभिरेव
काभिश्चिदद्य बहुयोजनदूरमेति ॥

**मारि**— इतोऽपि किमपि विचित्रम्!

एकः क[illegible]से सद्मनि भाजनेषु
सद्रावकेषु निहितामिह लोहतन्त्रीम्।
सन्ताडयत्यधिकदूरगतोऽपि सद्यः
पुत्रप्रसूतिमवगम्य ददाति बीजम् ॥

**सूत्र**—भाव! कृतमप्रकृतेन। अस्ति कुतूहलं परिषदो नूतनप्रयोगे।

**मारि**—(स्मृतिमभिनयति)

**सूत्र**—किन्नावगाहते स्मृतिपथं नवं रूपकम्?

**मारि**—अथ किम्।

**सूत्र**—अस्ति किल? दक्षिणकेरलेषु स्यानन्दूरपुरम्........

**मारि**—अहह! तत् भगवतः पद्मनाभाभिख्यस्य परमात्मनः भोगशयनभूमिः खलु? (सानुसरणमञ्जलिं बद्ध्वा)

श्रीपद्मनाभ! कमनीयतराञ्जनाभ!
भक्तानताभयरतेन्दुसमाननाभ!।
न त्वां विना भवति मे शरणं भवन्तं
नत्वा जनः किमिह वा शुचमेत्यमुत्र ॥

सूत्र—तत्र सञ्चितसुकृता वञ्चिमहीपतयः सुमतयः सन्ततं निवसन्ति खलु ?

मारि—अथ किम् ।

सूत्र—तत्र

मत्या धृत्या शुभकवितया विद्यया देवभक्त्या
लक्ष्म्या चोच्चैरुपचिततया प्राप्य षाण्मातुरत्वम् ।
शक्तिं बिभ्रद्विमतविजये ख्यापयन्नाम नैजं
राजोत्तंसो जयति धरणौ श्रीविशाखो यशस्वी ॥

तदीयं भुजमालम्ब्य वर्तते पाण्ड्यमण्डले ।
इलत्तूराख्यनगरी कविरत्नावलीखनिः ॥

मारि—विदितं तन्नगरम् । यत्र खलु श्रीवैखानसकुलतिलकायमानवरदराजनन्दनः, कृष्णाम्बिकागर्भशुक्तिमुक्तामणिः, सुन्दरराजशर्मा श्रीरामसन्देशहरप्रसादलब्धप्रतिभाभासुरः प्रकाशतेतराम् ।

सूत्र—स हि महितं श्रीरामभद्रविजयाभिख्यं चम्पूप्रबन्धं वैदर्भीवासुदेव हनूमद्विजयाभिधाननाटकयुगलञ्च निर्माय पश्चादुत्पाद्येतिवृत्तं पद्मिनीपरिणयाभिधानं प्रकरणं प्रथयन् अस्मासु न्यस्तवान् रसिकपरिषदि प्रयोक्तव्यमिति ।

मारि—स्मारितोऽस्मि भवता साधु । आर्य ! केऽपि नूतनान् प्रबन्धान् नाद्रियन्त इति शङ्का मामाकुलयति ।

सूत्र—अत्र विषये कविना तेन कश्चिदुपन्यासः कृतः ।

मारि—कथम् ?

सूत्र— "ये पूर्वासु च नूतनासु कृतिषु स्वारस्यमात्रं समं
गृह्णीयू रसिका न तान् प्रति वचः किं[1] वाच्यमास्ते मम ।
ईर्ष्यातोऽभिनवप्रबन्धविमुखा ये सन्ति ते नाधिकाः
तादृक्षस्य च भाविनः कृतिरियं प्राक्षैव पूर्वत्वतः ॥"

मारि—उपपन्नम् ।

1. किं किमपि ।

सूत्र—सम्प्रति सम्प्रतिपन्नं सर्वमस्माकं साधु। तथाहि—

"तद्रूपकं मृदुपदग्रथितं गभीरं
प्रत्यग्रवस्तु निखिलैश्च रसैः समग्रम्।
एष च साधुपरिषद्विदुषी कवित्वे
तौर्यत्रिके च भरतस्य वयं विवर्ताः" ॥

तत् त्वर्यताम्।

मारि—आर्य! कयापि चिन्तया किञ्चिदस्वस्थमिव मे मनः।

सूत्र—सा का सारविषया यदि, निगद्यताम्।

मारि—सारविषयैव। सरसहृदयो नाम सखा मे विदितः खलु। तद्दुहितरं सुमनोभिख्यां द्युतिमन्नाम्नि तरुणे स्वयमनुरक्तां दुर्वृत्तः चरमवयसि वर्तमानोऽपि कश्चित्कामयते लब्धुं जलानुषङ्गी। तत्र सर्वां धुरं मयि न्यस्यति वयस्यः।

सूत्र—अस्त्येव सुमनोद्युतिमतोस्सङ्घटने विधेरानुकूल्यम्, यतो भवन्तं तत्र लक्ष्यकीकृतवान् सरसहृदयः। भवांश्चावधत्ते।

"प्रसन्नेनापि विधिना प्रत्यक्षीभूयते नहि।
किन्तु तत्कार्यघटनानिपुणः प्रेर्यते जनः ॥

(नेपथ्ये)

साधु कुशीलव! साधु।

नियुङ्क्ते मां न चेद्धाता पद्मिन्या भास्करस्य च।
संयोजने सदा चिन्ता किं भवेदीदृशी मम ॥

मारि—कोऽयमेवं ब्रवीति?

सूत्र—किं तन्न जानासि। मम वैमात्रेयः कनीयान् शारदानन्दयोगीन्द्रस्य भूमिकां धारयन् व्याहरन्नेवं प्रविशति रङ्गभुवम्। तदावां पद्मिनी भास्करश्च भूत्वा प्रविश्य दर्शयावः स्वचातुरीमभिनयकलायाम्। (इति निष्क्रान्तौ)

॥ प्रस्तावना ॥

(ततः प्रविशति सशिष्यः शारदानन्दः)

शार—वत्स! काशस्तम्ब!

यावभिगृह्य करणं विषयप्रवृत्ते-
श्चेतः समाहितमहं कलये कथञ्चित् ।
तावत्क्कचित्प्रविशति श्रमसाधनीये
कार्ये सुहृत्प्रणयसंभृतमेतदाशु ॥

काश—किं नाम तत् ?

शार— अस्ति उदयधरो नाम महीभृत्प्रवरः ।

काश—स प्रथते खलु !

[1] यःसूर्याकलनेन लोकविदितख्यातिः समस्तोन्नतो
धीरो नोज्झितपूर्वकल्पितपदः स्वान्तर्गुहायां हरिम् ।
बिभ्राणादुदितो यतो नयनयोः श्रीभास्कराख्यस्सुत-
स्साफल्यं तनुते श्रिया तनुभृतां भाग्यं यथा मूर्तिमत् ॥

शार —तस्य महानुभावस्य सदृशी भार्या सम्पादयितव्येति ।

काश—तस्य सदृशी क्व लभ्येत ?

शार —अस्त्येव ।

काश—जिज्ञासे तादृशीम्

शार—[2] वर्तते कासारो नाम विमलान्तःकमलतया श्रिततापहारी प्रजापालकः । तदात्मभवा पद्मिनीति विनीतिमतिसौन्दर्यवसतिः ।

काश—यद्येवं कोऽत्र विचारहेतुः ?

शार —विद्यते तयोस्सङ्घटने प्रत्यूहबाहुल्यम् ।

काश—कथमिव ?

शार— जीमूतो नाम दुर्दान्तो वपुषा समलीमसः ।
अपि विच्युततारुण्यस्तरुणीं तामभीप्सति ॥

काश—तत्र कासारः कीदृशः ।

1. अस्य श्लोकस्य विशेषार्थः । सूरीणां सूर्यस्य चाकलनम् सूर्याकलनम् । पदम् व्यवसितम् स्थानञ्च ।

2. अर्थविशेषः अन्तःकमलम् = हृदयारविन्दम् , अन्तर्विद्यमानं जलम् ।

शार—अनभिमततदपेक्षोऽपि कृतज्ञतया पुरा तत्कलितमुपकारं स्मरन् दाक्षिण्यमवलम्बते तस्मिन् ।

काश—किमियदेव ।

शार—किञ्च, मत्तेभको नाम कश्चिन्निर्निमित्तबद्धवैरः पद्मिनीमपहर्तुं काङ्क्षति कासारमविलीकृत्य । अपि च, तस्य सुहृदसद्विरामं प्रतीक्षमाणः स्वोदयाय तुहिनमण्डलो नाम कापालिकः सहचर्या हिमान्या सदा निसर्गसिद्धपद्मिनीप्रतीपशीलः प्रथते ।

काश—अहो चिन्तानिमित्तमदभ्रमार्यस्य । कयापि विधया सङ्घटयितुं तौ प्रवर्तते भवान् ।

शार—सर्वथाऽस्माभिः लक्ष्मीं सन्निधाप्य तस्या मनोरथस्साध्यः ।

काश— भवत्प्रसादसम्प्राप्तलक्ष्मीसान्निध्यनिर्मला ।
पद्मिनी भास्करं प्राप्य चिरं विजयतां भुवि ॥

शार—अन्यदिदमाकर्ण्यताम् । कासारस्यात्मजः कुमुदाकरः कामयते कौमुदीम्, भास्करात्लब्धै[1] र्वसुभिर्वर्धितस्य सुधाकरस्य राज्ञस्सुताम् ।

काश—किमस्ति तत्रापि विरोधः ।

शार—तामाकम्य वर्तते मत्तेभकः स्वपुत्रकृते ।

काश—भगवन्, अनयोः सदृशयोः पद्मिनीभास्करयोः कौमुदीकुमुदाकरयोश्च युगपत् कथं संयोजनसम्भव इति तर्कयामि ।

शार—सर्वं दुर्घटमपि घटेत देव्या दुग्धसिन्धुदुहितुः प्रसादात् । तत्कासारमुपसरावः ।
(इति निष्क्रान्तौ) ।

॥ शुद्धविष्कम्भः ॥

(ततः प्रविशति अनुकूलनाम्ना सचिवेन सह कासारः)

कासारः—भोः मन्त्रिन् !

कन्यापितृत्वमिह सन्ततमातनोति
चिन्तां जनस्य महतीमिति यद्वदन्ति ।
जानामि सत्यमिदमद्य पतिं सदृक्षं
वत्साऽऽप्नुयात्कथमिति व्यथितो विचारात् ॥

1, [illegible] ।

**अनुकूलः**—स्वामिन् !

यदि सन्तं सुता लब्ध्वा भर्तारं नन्दति स्वयम् ।
जनकस्य सुखं तादृक् न पुत्रशतवत्तया ॥

**कासारः**—असति जामातरि जायते पुरुषस्य या व्यथा सा न शक्यते परिच्छेत्तुम् । तथाहि ।

जामाता यदि दुर्मतिः शुभवधूलाभावधि प्रश्रयं
श्वश्र्वां च श्वशुरे प्रदर्श्य तदनु प्राप्तेप्सितो दर्पितः ।
ताभ्यां स्वीयसुतातिवत्सलतया सम्भावितो मन्यते
स्वं वित्ते धनदं मतौ सुरगुरुं रूपे प्रसूनायुधम् ॥

हन्त ! दुर्मेधसो जामातरो मातरमिव सम्भावनीयां श्वश्रूं स्वभुजिष्यामिव पितरमिव पूज्यं पूज्यं क्रीतदासमिव ताभ्यां दुहितृप्रेम्णा दीयमानं यौतकमधमर्णगृहीतं धनमिवावजानते ।

(नेपथ्ये)

साहु साहु । (साधु साधु) ।

**कासा**—सखा मम खलु समभिनन्दति अस्मद्वचः ।

(प्रविश्य विदूषकः) वअस्स, जं कहिदं तुंहेहिं तं सवं मए अणुहूदम् । (वयस्य यत्कथितं युष्माभिस्तत् सर्वं मया अनुभूतम् ।

**कासा**—सखे कथमिव ।

**विदूषकः**—विवाहपेज्जन्तं मह चरणेसु णिपतन्तो दुम्मई जामाआ तदो मह घरभोअण-पीवरसरीरो वि मह पच्चक्ख एव्व 'अये भिखुअपुत्ति, दासीए पुत्ति, मूढजोणि-जादे, किं तुए तादघरादो आणीदं रण्डेत्ति मह कण्णं अहिक्खिवइ । किं वित्थरेण, अण्णदो संपादेदुं अक्खमो मह घरादो एव सव्वं इत्थिआधणत्तणेण आणेदव्वं मणाइ। तस्स सव्वं वि दुण्णअं सहेमि वच्चाए को वि सुगुणो दोहित्तो होस्सदित्ति पच्चासाए ।

(विवाहपर्यन्तं मम चरणयोः निपतन् दुर्मतिः जामाता ततो मम गृहभोजनपीवर-शरीरोपि मम प्रत्यक्षमेव, अये भिक्षुकपुत्रि, दास्याःपुत्रि, मूढयोनिजाते, किं त्वया तातगृहादानीतं, रण्डे इति मम कन्यामधिक्षिपति । किं विस्तरेण । अन्यतस्संपादयितु-मक्षमः मम गृहादेव सर्वं स्त्रीधनत्वेनानेतव्यं मन्यते । तस्य सर्वमपि दुर्णयं सहे, वत्सायां कोऽपि सुगुणो दौहित्रो भविष्यतीति प्रत्याशया) ।

**कासा**—अलमप्रस्तुतेन। भो मन्त्रिन्! किं विसृष्टो निखिलनृपालबालप्रतिच्छन्दग्रहणाय चित्रशिल्पी।

**अनु**—तस्य प्रत्यागमनसमयोऽपि अतिवर्तते (प्रविश्य दौवारिकः) जेदु देव्वो, ससिस्सो सारआणंदो पडिहारभूमिं गओ।

(जयतु देवः। सशिष्यश्शारदानन्दः प्रतिहारभूमिं गतः)।

**कासा**—प्रवेश्यतां सोपचारम्।

**दौवारिकः**—तह (इति निष्क्रम्य पुनः प्रविश्य) इदो इदो महाजोई।

(तथा। इत इतो महायोगी)।

(प्रविशति सशिष्यश्शारदानन्दः)

**कासारः**—उत्थाय प्रणमति।

**शारदानन्दः**—विजयस्व धर्मात्मन्!

**कासा**—उपविश्यताम्।

**शार**—(उपविश्य) अपि कुशलम्?

**कासा**—भगवन्! भवदाशीर्गोचरतया सर्वेऽत्र कुशलिनः स्मः।

**चिन्तातपातपो[1]च्छुष्यदात्मनः पुरतो मम।**
**भवदीयप्रसादोऽसावमृतासारतां गतः॥**

**अनु**—भगवन्! प्रतिपालयामहे किमपि विज्ञापयितुकामा भवद्दर्शनम्।

**शार**—प्रायो विदित एवास्माभिस्सर्वोऽप्युदन्तः। अधुना कीदृशी जीमूतदुश्चेष्टा।

**कासा**—यादृश्यस्मान् अहर्दिवमाकुलयेत्।

**शार**—किं साक्षादभ्यर्थितोऽसि तेन कन्याम्।

**कासा**—तदेवावशिष्यते।

**अनु**—तदपि श्वः परश्वो वा भविष्यतीति मन्ये, यतस्तदमात्यस्य पुरोवातस्य पत्रिका तादृशी मया लब्धा।

**शार**—स्वयमेवागमिष्यति किं जीमूतः?

1. तपातपः ग्रीष्मसम्बन्धी आतपः।

अनु—नहि । प्रथमं तन्नियुक्तः पुरोवातः ।

शार—कीदृशो मत्तेभः ?

कासा—हतकः सहानुगैः मामाकुलीकृत्य पद्मिनीमपहर्तुं प्रतीक्षते समयम् ।

शार—आस्तामेतत् । भद्रायाः पद्मिन्या हृदयं कुत्रानुषजति ।

कासा—स्फुटं तन्नावगम्यते । (प्रविश्य दौवारिकः) किअहत्थो णाम चित्तलेहओ समअं पडिवाळेदि । (कृतहस्तो नाम चित्रलेखकः समयं प्रतिपालयति)

कासा—प्रविशतु ।

दौवा—(निष्क्रान्तः)

शार—स को नाम ?

अनु—नृपतिकुमारप्रतिच्छन्दग्रहणाय नियुक्तपूर्वः । (प्रविशति कृतहस्तः स्वहस्तन्यस्त-चित्रपटनिकरः । प्रणमति सर्वान् ) ।

अनु—किमाचरितनिदेशोऽसि ?

कृत—अथ किम् ।

शार—किं केवलं नृपाणां कुमारा गृहीतरूपाश्चित्रे । आहोस्वित् तत्स्वसारश्च ?

कृत—द्विविधान्यपि न्यस्तानि चित्रे नृपत्यपत्यानि ।

शार—राजन् ! चित्रावलोकाय तव पुत्रावपि समानीयेताम् ।

कासा— (अनुकूलमुखं प्रेक्षते) ।

अनु—अयमहमेवानेष्यामि तौ । (इति निष्क्रम्य पुनस्ताभ्यां सह प्रविशति) ।

कुमुदाकरः—(स्वगतम्) अहो मम चेतः शारदानन्दसन्दर्शनेन प्रसीदति ।

पद्मिनी—(स्वगतम) दीसइ चित्तपडणिअरो । (दृश्यते चित्रपटनिकरः)

(उभौ पितरं योगिनञ्च प्रणमतः)

शारदा— श्रेयांसमावृत्तमवाप्य भद्र भजस्व हर्षं कुमुदाकर त्वम् ।
प्रजावतीमेत्य सुजातशोभां भद्रे प्रमोदस्व च पद्मिनि त्वम् ॥

कासा—( अपवार्य ) भगवन् !

जामातुः प्रथमं प्राथ्यः स्नुषाया वा गुणो नृणाम् ।
इति सन्तर्कयन्ति ते [illegible] निश्चयम् ॥

शारदा—रे कृतहस्त ! नृपतिकुमारान् आरात् पद्मिनीनयनपथं प्रवेशय ।

कृत—भर्तृदारिके, दृश्यताम् ।

अयं कलावान् सकलाभिनन्द्यो राजा मनोजोत्सवदानदक्षः ।

पद्मिनी—दस्सणिज्जो । दस्सेहि अवरं वि । (दर्शनीयः । दर्शयापरमपि) ।

कृत— अयं तु भौमो रिपुभावमेति यस्याधिमन्तर्विदधीत तस्य ।

पद्मिनी—एसो अम्हाणं सआ मित्तभावं एव्व गच्छेउ ।

(एषोऽस्माकं सदा मित्रभावमेव गच्छतु)

कृत— अयं बुधो नाम स राजपुत्रो यन्मित्रमात्रं लभते तनोति ।
तस्यार्थलाभादिकमेष जीवो दृष्टयैव धत्ते शुभभावपुष्टिम् ॥

पद्मिनी—एदे महत्त्वाणं वरा । तदो । (एते महात्मनां वराः । ततः)

कृत— एष प्रतीतः कविनामधेयो यस्यानुकूल्यं भजतेऽत्र भावे ।
तस्याखिलान्यात[illegible]ते सुखानि निहन्ति सर्वं विपरीतभावे ॥

एष इव कलत्रसुखं दातुं नान्यः प्रभवति ।

पद्मिनी—को एसो अवरो ? (क एषोऽपरः)

कृत—एष सौरिर्नाम ।

येषां दुःखे प्रवर्तेत तैस्सद्य[illegible] ।
आराधनीयः क्षेमाय व्यथयेत्तानपूजितः ॥

पद्मिनी—किं अण्णो अत्थि दट्ठव्वो (किमन्योऽस्ति द्रष्टव्यः) ?

कृत—सन्ति बहवः ।

शार—(अपवार्य) अये कृतहस्त, अलमपरैः प्रदर्श्यतां भास्करः ।

कृत— उदयधरतनूजो दृश्यतां पद्मवक्त्रे
हृदयरतिकरो यस्तेजसा नेत्रभाजाम्

तरुणमपि तमांसि प्रेक्ष्य विध्वंसयन्तं
यमिह दधति वृद्धाश्चाञ्जलिं शुद्धभावाः ॥

**पद्मिनी**—वीक्ष्य (स्वगतम्) किं मअणो एसो ? तस्स वि एआरिसी सोहा णो सुदा । अहवा तस्स वि तादो पुरिसोत्तमो अणेण रूवेण सम्पत्तो ?

(किं मदन एषः । तस्याप्येतादृशी शोभा न श्रुता । अथवा तस्यापि तातः पुरुषोत्तमोऽनेन रूपेण संप्राप्तः) । (इति चिन्तयन्ती स्थिता)

**कासा**—(अपवार्य) स्वामिन् !

अन्यान् निरीक्ष्य वदनं विनिवर्तयन्ती
वत्साऽधुना तमिह भास्करमीक्षमाणा ।
चित्रेऽपि हन्त विकसन्नयनारविन्दा
साक्षाद्विलोक्य भगवन्नथ कीदृशी स्यात् ॥

**शार**—स्पष्टोऽभूदाशयोऽस्याः ।

**कृत**—सन्ति बहवोऽन्ये नृपकुमाराः पटेषु ।

**पद्मि**—इदो वरं णिवकण्णिआओ दस्सणिज्जाओ । (इत परं नृपकन्यकाः दर्शनीयाः)

**शार**—(अपवार्य) राजन् !

भास्करे सदृशे लग्नं पद्मिन्या हृदयं स्वयम् ।
नेतुमन्यत्र कश्शक्तो जानक्या इव राघवे ॥

**कासा**—कृतहस्त ! दर्श्यन्तां नृपतिकुमार्यः ।

**कृत**—भद्र !

कृत्तिकामेति विख्याता कृत्तिवासःप्रियाद्युतिः ।
एषा पुरुषसिंहस्य शंसत्युदयमुच्चगा ॥

**कुमुदाकरः**—पश्यामि । ततः ।

**कृत**— दृश्यतां चारुरूपेयं विश्रुता रोहिणीच्छविः ।
यथाऽस्यां राजहृदयं न तथाऽन्यत्र रज्यति ॥

**कुमु**—रज्यतु नाम कामम् ।

कृत—(स्वगतम्) रोहिणीच्छविं दृष्ट्वापि समुल्लासमनुपेयुषोऽस्य चित्तं किं लगेन्मृगशिरोयुतौ वा परासु मनोहरासु अपि आर्द्राशोभाप्रभृतिषु वा। ततः कौमुदीमेव दर्शयामि। (प्रकाशम्)

कल्याणी क्षीरवाराशिकन्यकासोदरी दृशः।
गोचरीक्रियतामेषा प्रकृत्या विमला त्वया॥

कुमु—(वीक्ष्य) (स्वगतम्)

सौन्दर्यदुग्धजलधिं कुतुकात् प्रमथ्य सारं तदीयमखिलं जलजासनः किम्।
गृह्णन्ससर्ज जगतां नयनोत्सवाय चित्तेन संप्रणिहितेन निकाममेताम्?॥

शार—(अपवार्य) राजन्!

कौमुद्यालोकसंभूतविकासः कुमुदाकरः।
कौ: कोल्लासलालाक्षिभ्रमरो राजतेतराम्॥

कासा—भगवन्!

अभीप्सन् हरिणाक्रान्तसल्लकीपल्लवावलिम्।
चलपत्रदलश्रेणीं सुलभां कलभोऽस्यति॥

शार—(अपवार्य) राजन्! दिष्ट्या भवदुक्त्या कुमुदाकरस्य कौमुदी सुलभैवेति ज्ञायते [1]हरिणेनाक्रान्तायाः सल्लकीपल्लवावलेः प्राप्तिः सुशका खलु कलभस्य।

कृत—विद्यन्ते परा राजकुमार्यः।

कुमु—द्रष्टव्या एव यद्यवकाशः।

कासा—दिष्ट्या लब्धोऽवकाशः कौमुदीदर्शनावधि।

कुमु—(लज्जां नाटयति)।

शार—भद्रे! तव किमस्ति परेषामपि पार्थिवनन्दनानां दर्शनेऽवकाशः?

पद्मिनी—अज्ज! अहं किं अत्तणो पहवेमि? (आर्याहं किमात्मनः प्रभवामि)

शार—तव कः पुनः प्रभवति।

पद्मिनी—गुरुअणो। (गुरुजनः)।

1. श्लेषार्थः. हरिणाक्रान्त–सिंहाक्रान्त, हरिणेन–एणेन आक्रान्त, इति।

शार—उदयधरात्मजे हृदयप्रवर्तनं विना अन्यत्र तव गुरुजन एव प्रभवति ।

पद्मिनी—(मुखं नमयति)

शार—(अपवार्य) राजन्! विदितौ भवत्तनुजयोः प्रणयभाजनजनौ ।

कासा—(अपवार्य) भगवन्!

जीमूतकः प्रयतते स्वयमाप्तुमेतां
मत्तेभकः स च जिहीर्षति निर्निमित्तम् ।
सा कौमुदी त्वहह तस्य वशं गताऽऽसीत्
पुत्री मनोरथमिमां कथमाप्नुतां तम् ॥

शार—　यद्यानुकूल्यं विधिराप्नुयात् ते जीमूततः कश्चन वज्रपातः ।
मत्तेभकं नाशयतु क्षणात् तं जीमूतकं हन्तु [1]हरिः प्रचण्डः ॥

कासा—सर्वस्य भव्यस्य निदानं भवदाशीर्नः ।

(नेपथ्ये)

राजन्! विजयस्व, विजयस्व ।

जीमूतकस्य विगमादिह भास्करोऽय-
मत्युन्नतं पदमवाप्य विराजमानः ।
तां पद्मिनीं विकसितां कलयत्यमन्दं
मत्तेभकोऽपि परिधावति तापतप्तः ॥

शार—कोऽयमस्मदनुकूलं व्याहरति ?

कासा—एष वन्दी विज्ञापयति माध्याह्निकसमयम् ।

शार—भद्रेयमुपश्रुतिः ।

कासा—सर्वं भवत्प्रसादात् ।

शार—भद्रौ, इह विहरतमव्याकुलौ । (तथेति तौ परिक्रामतः) ।

शार—राजन्! पश्य पुत्री ।

1. 'शिखी हरिश्च' इत्यपि पाठः ।

नेत्रं विकासि दुहितुस्तव भास्करेण
कृष्टं पटस्थितिजुषा प्रतिकर्षतीव ।
लज्जा सुधाकरसुताकृतिलग्नमक्षि
ह्रीस्ते सुतस्य तु समुद्धरतीव यत्नात् ॥

॥ उभौ निष्क्रान्तौ ॥

शार—रे कृतहस्त ! कौमुदीभास्करयोः प्रतिच्छन्दद्वयं शुद्धान्तं नीयताम् ।

कृत—तथा (इति निष्क्रान्तः) ।

शार—राजन् ! त्वरयति मां कश्चित् कार्यावेगः ।

कासा—यद्यर्हामि श्रोतुं, शुश्रूषे ।

शार—उदयधरश्चिरादधीतानेकविद्यं भास्करं भवान् अस्त्रकलाकुशलं कलयत्विति मां अभ्यर्थयते । ततस्तं निजान्तेवासिनं विधाय तत्प्रार्थनां सार्थीचिकीर्षामि ।

कासा—स्वामिन् ! स महाभागः श्रीमान् भवता कथञ्चिदत्रानीतो यदि प्रतिच्छन्दालोकसफलीभूतयोर्लोचनयोर्विहितामसूयां श्रवणयुगस्य शमयितुकामोऽस्मि तत्सूक्तिमाधुरीप्रापणेन ।

शार—(स्वगतम्) अस्मदाशयमनुरुन्धे कासारप्रार्थना । (प्रकाशम्) पूरयिष्यते मनोरथस्ते ।

कासा—समागमिष्यति यदि पुरोवातः भणितव्यमुपदेष्टव्यमत्र भवता ।

शार—(कर्णे) (एवं वक्तव्यमिति कथयति ।)

कासा—(स्वगतम्) महान्तमुपायमन्तर्निधाय स्वयमेवमयं ब्रवीति । (प्रकाशम्) यथा रोचते गुरवे ।

शार—अनुकूल ! सज्जीकर्तव्या पुरोवातस्य सम्भावनासामग्री ।

अनु—यथाऽऽदिशति भवान् । (इति निष्क्रान्तास्सर्वे)

॥ इति श्रीपद्मिनीपरिणये प्रथमोऽङ्कः ॥

## ॥ अथ द्वितीयोऽङ्कः ॥

(ततः प्रविशति पुरोवातः)

**पुरोवातः**—आदिष्टोऽस्मि जीमूतमहाराजेन। यथा–भोः सचिव! कासारोऽभिगम्य भवता मदर्थे कन्यां प्रार्थयितव्य इति। (सविमर्शम्)।

**प्रवृद्धभावात्स्वयमुच्चलत्को[1] निसर्गलोकश्रुतिघोरनादः।**
**तथापि जीमूतक एष धत्ते विद्युत्सु तन्वीषु सदानुरागम्॥**

किञ्च, यदि भास्करालोको भवेत् पद्मिन्याः तस्मिन् महान् प्रणयावेशस्स्यादिति आशङ्कया भास्करापवारणाय तमोभिख्यां नाम कामपि लोचनभीषणामचूचुदत्। अस्तु, यथाकथंवा—कासारमुपसरामि (इति परिक्रम्य, अवलोक्य च) अतिरमणीयोऽयं कासारवसतिसन्निवेशः।

**उपवनतलरूढद्योस्फुरन्नालिकेर-**
**क्रमुकमुखमनोज्ञानोकहश्रीस्समन्तात्।**
**अधिगतसुखवासस्वच्छरूपद्विजालि-**
**र्मधुररससमृद्धस्त्वप्रकृत्यातिचारुः॥**

(निरूप्य) वर्ततेऽत्र कासारः। य एषः।

**विकासिवक्त्राम्बुजराजमानलक्ष्मीमनोज्ञस्सुकृतैकभूमिः।**
**सदाश्रितप्रापितजीवनर्द्धिः स्वच्छान्तरङ्गस्थितिमादधानः॥[2]**

(प्रविश्य) **कासारः**—(पुरो विलोक्य) समागच्छति पुरोवातः।

**पुरोवातः**—अपि कुशलं धर्मात्मने भवते।

**कासारः**—अपि निरामयो जीमूतः।

**पुरो**—अथ किम्।

**कासा**—किमाज्ञापयति सखा।

**पुरो**—किं प्रार्थयत इति प्रष्टव्यम्।

**कासा**—(स्वगतम्) हन्त पापीयान् प्रवर्तते पद्मिनीं भास्करालाभविधुरां विधातुम्।

1. उच्चलच्छीर्ष. निर्गतजलश्च।
2. स्वच्छान्तरङ्गस्थितिं निर्मलचित्ततास्। निर्मलां तरङ्गाणां स्थितिं च।

(प्रकाशम्) अगम्येऽस्मादृशैः स्थाने वर्तते स महोन्नते ।
यत्र वैरायते तत्र वज्रपातापदं दिशेत् ॥

**पुरो**—(स्वगतम्) एष स्तुवन्निव विगायति । (प्रकाशम्) भवान् न कस्य वाऽभ्यर्थनीयः ।

हरत्याश्रितसन्तापं प्रीणात्यनिमिषावलिम्[1] ।
रतिं तनोति हंसानामपि राजति सत्पथे ॥

**कासा**— जीमूतकरे खलु तिष्ठति जीवनदानम् अस्मादृशानाम् । तदभिधीयतां तदाशयः ।

**पुरो**— प्राप्तवानपि जीमूतो बह्वीस्सौदामिनीतनूः ।
भवन्तं याचते प्रीत्या पद्मिनीं मित्रवत्सल ! ॥

**कासा**—(स्वगतम्) सा पद्मिनी भवति भास्करदत्तचित्ता
जीमूतकश्च मलिनो गतयौवनश्रीः ।
सन्मार्गसङ्गतिरस्कृतिकृत्स्वयं तां
हा याचितोऽसि तदनादरजातशङ्कः ॥

भवतु शारदानन्दोपदिष्टं कथयामि । (प्रकाशम्) किं सख्युः मनोरथाकलने संशयोऽस्ति मम ? परन्तु किमपि प्रार्थनीयमस्ति ।

**पुरो**—आज्ञाप्यताम् ।

**कासा**—तस्या भगवता शारदानन्देन किमपि मन्त्रमुपदिश्य समादिष्टं किमपि व्रतम् ।

**पुरो**— कथमिव ?

**कासा**— भद्रे मयाऽयं विहितोऽद्य मन्त्रो जप्यस्त्वयोद्वाहदिनादि मासान् ।
त्रींस्त्वन् सर्वेन्द्रियबाह्यवृत्त्या पत्युश्चिरायुष्ट्वशुभप्रजाप्त्यै ॥

तादृशीं भवतीं मोहात् भर्ता वा संस्पृशेद्यदि ।
स भस्मसाद्भवेत्सद्यः किमुतान्यः पुमानिति ॥

**पुरो**— (स्वगतम्) अधिकचपलः खलु जीमूतः । किं वा भविष्यति । (प्रकाशम्) निजोदयहेतुभूतस्य व्रतस्य समाचरणं किं नाङ्गीकरिष्यति जीमूतः ।

**कासा**—अङ्गीकरिष्यति यदि प्राप्नुयात् उपयमाधिगमनप्रयोजनम् । ततः प्रस्थाय समये शुभे समागतोऽस्तु सानुगो जीमूतः ।

1. अनिमिषाः = देवाः मीनाश्च ।

जीमूतकः सत्वरमेतु नाम [1]महोत्सवा स्याद्वसुधा समन्तात् ।
सञ्जातकीर्तिश्च दिशोऽप्यशेषा विद्युत्प्रदीपज्वलिता भवन्तु ॥

पुरो — द्रुतमानीयतेऽयं मया । (इति निष्क्रान्तः) ।

कासा—(स्वगतम्) पुरोवातो भूत्वा पुरत इह मां द्राक् कलुषयन्
प्रयातो जीमूतं पुनरपि तमत्राकलयितुम् ।
मया किं कर्तव्यं झटिति स च मत्तेभहतकः
समायातः क्रूरः किमिव मयि चेष्टेत मृदुले ॥

हन्त ! पुराऽस्माकमुपकृतवानपि [2]स्वर्णश्रीदानेन जीमूतः सम्प्रति मर्यादातिलङ्घनेन लोकार्तिकारी विप्रलभ्यः संवृत्तः ।

एष हि,

[3]वर्षातिभीमा भुवि वाहिनीर्द्राक् प्रसारयन् हन्ति चराचराणि ।
भिनत्ति भित्तीरपि दुर्गतानां धुनोति सर्वं सुमनोनिकायम् ॥

(नेपथ्ये कलकलः)

कासा—हन्त केयं तिमिरावृतिः, यस्या भीतो जनः शब्दायते ।

(नेपथ्ये) वत्स ! हन्यतामियं भवतः तिरस्कृतये जीमूतप्रवर्तिता तमोऽभिख्या दुष्टचारिणी।

कासा— अयं शारदानन्दस्य कण्ठस्वर इव श्रूयते ।

(पुनर्नेपथ्ये) भगवन् ! भवदनुग्रहात् क्षणाद् विनाशयामि तां पापीयसीम् ।

कासा— कस्यायं मधुरगम्भीरो ध्वनिः अभिनवतारुण्यारम्भरमणीयस्य पुरुषधौरेयस्य ?

(पुनः नेपथ्ये) यावत्स्वयं परिकिरन्निजगोसहस्रं
वत्सो जवेन समवर्द्धत तावदेव ।
सा पापिनी विलयमेति विलोचनं नः
कामं प्रसीदति मनः कुतुकं दधाति ॥

कासा—नूनमिदं भास्करविलसितम् । (इत्युत्थाय प्रतीक्षते) (ततः प्रविशति सवयस्येन भास्करेणानुगम्यमानः शारदानन्दः ) ।

1. महान् उत्सवो यस्याम् । महत् उत्सवाः गिरिस्रुतजलं यस्यामिति च । कीर्तिः = यशः पङ्कश्च ।
2. स्वर्ण श्रीदानेन = आवश्यकाले धनादिदानेन, सुअर्णस् श्रीदानेन, मधु जलदानेन। अन्यत्सुगमम्।
3. वाहिनीः = भयङ्करसेनाः नदीश्च । अन्यत्सुगमम् ।

शारदा—वत्स ! पश्य,

[1] श्रीधर्मिनव्यनगरं नामेदं भाति साधु जयतीह ।
गोदा रमणीगुणभृज्जनतादुरितप्रणाशने निरता ॥

इह हि पार्श्वद्वयोल्लसदनुष्णमयूखबिम्ब-
क्रीडोत्पतन्मृगविहारिकुमारसौधाः ।
वीथ्यो विभान्ति परितो गरुडध्वजस्य
प्रासादमुच्चतरगोपुरतोरणाढ्यम् ॥

सरसगुणधरोत्था धिन्वती विष्णुचित्तं
जनकमिह विशेषापादकात् सौमनस्यात् ।
जयति विबुधलोकश्लाघनीया शुभाङ्गी
कमलवदननिर्यत्सूक्तिमाध्वीकधारा ॥

शतानन्देन तीर्थेन श्रयतां दुरितं हरन् ।
सतामग्रेसरो नाथः श्रीमानिह विराजते ॥

कासा—(वीक्ष्य) तामावृतिं सकललोचनभीमरूपां
स्वीयौजसा विदलयन्नतिचारुमूर्तिः ।
आनन्दयन्नखिलचक्रजनं चकास्ति
कः पद्मिनीं सुखयितुं प्रभवेत्सुरोऽस्मात् ॥

(सप्रमोदं शारदानन्दमुपसृत्य) भगवन् ! प्रतिपाल्यामि सहभास्करस्यात्र भवतः समागमम् । भवतः सान्निध्येन खलु निष्कलुषः सामोदश्च भवामि ।

1. श्रीधर्मिभिः = श्रीमद्धार्मिकैः नव्यम् = स्तुत्यं । नगरम् = श्रीविल्लिपुत्तूरिति द्राविडभाषाया प्रसिद्धनाम पुरम् । गो दार मणी गुणान् बिभर्तीति तथोक्ता जनता । रमणीगुणभृत सुन्दरीगुणशालिनी जनतायाः दुरितप्रणाशने निरता च गोदा तन्नामकदेवी । विष्णुचित्ताख्यभगवद्भक्तगृहेऽवतीर्णा । अपि च, श्रीधर्मिनव्यनगरं मिथिलापुरम् । गोः भूमिः दाराः येषां ते राजानः तेषां मणी श्रेष्ठःश्रीरामः तस्य गुणभृत्सीता इति च । सरसगुणायां जलगुणसहितायां धरायां भवतीति तथोक्ता । विष्णुचित्तं नारायणपरम् । जनकं जनम् । सरसगुणा धराभूस्सीता । विष्णुचित्तं जनकं वैदेहम् । सरसगुणानां धरतीति धरा । भूः भूदेवी गोदानाम्नावतीर्णा जनकं पितरं च तन्नामकं विष्णुचित्तं द्विजम् । अपि च विशेषापादकात् सौमनस्यात् शोभनमनोभवात् जनकं धिन्वती । सौमनस्यात पुष्पसम्बन्धिनः विशेषापादकात् विष्णोर्भगवतश्चित्तं धिन्वती । भगवती गोदा प्रतिदिनं स्वकेशधृतमाल्यं समर्प्य भगवन्तं प्रीणयामासेति गोदाचरित्रे स्पष्टम् । शतानन्देन बहानन्दकरेण तीर्थेन पयसा सरोनाथः कासारः । श्रयतां सतां दुरितं हरन् अग्रे विराजते । सतामग्रेसरः श्रेष्ठः इति च । शतानन्देन तन्नाम्ना तीर्थेन पुरोहितेन इति च ।

**शारदा**—कथं ज्ञायते भास्करोऽयमिति ?

**कासा**— रूपमेवास्य वदति भास्करोऽयमिति स्फुटम् ।
तां निहन्तुं तमोऽभिख्यां तस्मादस्मात्प्रभुश्च कः ? ॥

एतस्य हि, वदनमधिकवेगादापगाधीशमध्यो-
द्गमनविगलितैणश्चन्द्रमाः शारदो नु ।
उत लसदरविन्दं प्रातरुन्मृष्टरेणुः
कुसुमविशिखलीलाकल्पितो दर्पणः किम् ॥

सञ्चिन्त्य सारसभवो मदनं स्वशिल्प-
नैपुण्यसूचकतनुं हरनेत्रदग्धम् ।
जातं पुना रतिविलोचनमात्रलक्ष्य-
मेनं ससर्ज निरुपाधिमशेषदृश्यम् ॥

**शारदा**—राजन् ! उदयधरजात एकः पुरुषमणिर्भास्करोऽयमिह नान्यः ।
कासारप्रभवैका स्त्रीरत्नं सा हि पद्मिनी नान्या ॥

किं बहुना ! बिभर्ति कमलोल्लासं पद्मिनी सा न संशयः ।
दधाति भास्करः श्रीमान्नारायणकलां खलु ॥

**भास्क**—(अपवार्य) वयस्य ! जानासि किमस्य नन्दिनीम् ।

**अरुणः**—(अपवार्य) सखे ! किं मे ज्ञातया तया । भवता अवश्यं ज्ञातव्येति ज्ञायते भगवद्वचसा । (सर्वे उपविशन्ति) ।

**शारदा**—राजन् ! पुरोवातः किमागतः ?

**कासा**—आगत्य गतो द्रुतं जीमूतामिगमनं शंसन् मामाकुलीकृत्य ।

**भास्क**—(अपवार्य) सखे ! जीमूतागमनश्रवणेन मे मनः कुतोऽकाण्डे व्यथते ।

**अरु**—(अपवार्य) वयस्य ! पद्मिन्युपलम्भविघातशङ्कया ।

**भास्क**—किं जीमूतः प्रयतते तां प्राप्तुम् ?

**अरु**—तथाऽवगम्यते । प्रयततां नाम जडः ।

प्रवृत्ते शारदानन्दे भास्करोल्लासकारिणि ।
पद्मिन्यामेति साफल्यं किं जीमूतमनोरथः ? ॥

**भास्क**—कुतो भगवतः शारदानन्दस्य जीमूतविजृम्भणासहिष्णुता। पुनरस्मदुल्लासे महदौत्सुक्यं च।

**अरु**— कारणं महतां प्रीतावप्रीतौ चामलात्मनाम्।
जनस्य सुगुणत्वञ्च दुर्गुणत्वञ्च नेतरत्॥

**कासा**—(अपवार्य) भगवन्! अनितरसुलभगुणगणसम्पूर्णां कामपि कन्यां प्राप्य तया धीरोदात्तजामातृको भवेयमिति मनोरथं लब्धुं भगवन्तं माराराातिमाराधयन्नहं तदीयाभिषेकसमुचितं सलिलं पूजोपयोगि पुष्पञ्च समुत् समुत्पादयन् (आसम्)।

**शार**—ततः।

**कासा**—कदाचन प्रत्यूषसमये स्वप्नदशायाम्—

निर्णिक्तमौक्तिकमहीधरभृङ्गशङ्का-
सन्दायिमूर्तिशशलक्ष्मकृतावतंसम्।
वामाङ्कभासुरकलत्रमतिप्रसन्नं
तेजोऽभवन्मम पुरो वृषभाधिरूढम्॥

**शार**—अहो! चन्द्रचूडस्य भक्तेषु क्षिप्रप्रसादिता। ततः।

**कासा**—ततः प्रणताय मह्यं भूतेशः मह्यत्किमपि सरोजमुकुलरूपं वस्तु निस्तुलं प्रदाय प्राह स्म च।

**शार**—कथमिव।

**कासा**— 'लक्ष्मीनिवासभवनं भविता कुमारी
राजंस्तवास्य मुकुलस्य करेण भेदः।
स्याद्यस्य तेन पुरुषेण भविष्यसि त्वं
जामातृमान् तमिह विद्धि हरेरभिन्नम्॥

किञ्च, 'एतदन्तर्वर्तते कश्चिन्मणिः। तन्महिमानमवगमिष्यति कश्चित्संयमी'ति।

**शार**—यद्येवमानीयतां तन्मुकुलम्। किमिदं स्वप्नमात्रम्?

**कासा**—नहि, वस्तुत एव। (उत्थाय निष्क्रम्य नयति मुकुलपेटीम्)।

**शार**—(उद्घाट्य पेटीम्) वत्स! गृह्यतामिदं पुरहरदत्तं कार्मुकं रामभद्रेणेव भवता।

**भास्क**—(गृह्णाति करेण मुकुलम्)।

कासा—चक्षुषी निमील्योन्मील्य च

यावत्करेण मुकुलं स्पृशतीह भद्र-
स्तावत्क्षणेन भवति स्फुटितं स्वयं तत्।
तन्मध्यवर्तिमणिसम्भवमेतदोजः
सोढुं कथञ्चिदपि मे क्षमते न चक्षुः ॥

[illegible]ार—सहर्षं मणिं गृह्णाति। राजन्! अचिरादस्य महिमानमवेत्य प्रापयामि भवन्तम्।

कासा—यथा रोचते भगवते।

[illegible]ार—(अपवार्य) राजन्! किं विदितो भास्करप्रभावः।

कासा—(अपवार्य) विदितभास्करप्रभावमपि मानसं मे विचिन्त्य जीमूतविजृम्भणं दूयते।

[illegible]ार—मा स्म चिन्तयः। दिष्टमनुकूलं नः।

कासा—न ज्ञायते मत्तेभवृत्तम्।

[illegible]ार—(स्वगतम्) हन्त! कासारव्याहारस्मारिते मत्तभके करस्थमणिवरमहिम्ना सर्वं तदीयचेष्टितं प्रत्यक्षं दृश्यते। अद्य खलु अयं तुहिनमण्डलं नाम कापालिकं चोदयति—'कथञ्चिदपि पद्मिनीमाहरे'ति। स च 'मायया व्योमयानं निर्माय तेन वियति गच्छन् तामपहरामि' इति प्रतिजानीते। अत्रागच्छतु नाम स पाषण्डः। किन्न हन्येत चण्डकरेण भास्करेण तुहिनमण्डलः सन्निहितेन। (प्रकाशम्) राजन्! मा स्म दूयेथाः। स्वत्पुत्र्याः सर्वकामितसिद्धये भगवत्या भार्गव्याः प्रसादसम्पादकं किमपि व्रतमुपदेक्ष्यामि।

कासा—अनुगृहाण।

[illegible]ार—किमन्यत्?

कासा—वत्सः कुमुदाकरः

अनुदिनमिह चित्रदर्शनाह-
प्रभृति हि तान्तनितान्तपाण्डुराङ्गः।
श्वसिति च मुहुरुष्णदीर्घमार्तै-
र्न निगदति प्रतिवाक्यमत्र पृष्टः ॥






O13,258,1
192 J52

शार—(स्वगतम्) कौमुद्यामुत्कण्ठैवात्र निदानम्। (प्रकाशम्) कौमुदीपटे गृहीत्वा कुमुदाकरस्वरूपमपि प्रदीयताम्।

कासा—(स्वगतम्) गभीरहृदयो योगी। (प्रकाशम्) कोऽत्र भोः! (प्रविश्य)

कञ्चुकी—आणवेदु भट्टा (आज्ञापयतु भर्ता)

कासा—निगद्यतां कृतहस्तः कौमुदीपटे कुमुदाकरस्वरूपमपि विन्यस्य दीयतां पूज्यपादहस्त इति।

कञ्चुकी—तह (तथा) (इति निष्क्रान्तः)

शार—वत्स भास्कर! तावदत्रैव वसतु भवान् सह वयस्येन, यावदहं कौमुदीमधिगम्यागमिष्यामि।

कासा—(स्वगतम्) कोऽप्ययं प्रथमोऽभ्युदयः, यत् भास्करः सन्निधत्त इति।

अरु—(अपवार्य) सखे!

व्याजेन येन केनाऽपि वस्तुमत्राभिवाञ्छतः।
भवतो गुरुनिर्देश ईदृशोऽभिमतो न किम्?॥

भास्क—(अपवार्य) मा परिहसीः।

कासा—भगवन्! श्वः परश्वो वा आगताय जीमूताय समर्पणावशेषा कसा वर्तते। तत्र इतिकर्तव्यतां न जाने।

शार—मा चिन्तय। यत्र कुत्रचित् गतोऽप्यहं प्रतीक्षमाणो भवदुपस्थानसमयं चक्षुषाऽऽन्तरेण तत्क्षणं सन्निधास्ये।

कासा—महान् प्रसादः। (सर्वे प्रणमन्ति योगिनम्)।

शार—भद्रमस्तु। (इति निष्क्रान्तः)।

कासा—भद्र, भास्कर!

आयत्तमत्रास्त्युपभोगयोग्यं यद्यन्ममाशेषमितःपरं त्व[illegible]म्।
भुक्तावशिष्टं विनियोक्तुकामस्तत्स्वयश्चासि सुहृद्विधेयः॥

भास्क—आर्य! अनुगृहीतोऽहम्।

कासा—कोऽत्र भोः!।

(प्रविश्य)

कञ्चु—एसोम्हि (एषोऽस्मि) ।

कासा—भद्र! भास्कराय गृहोपवनमध्यलसद्विहारमन्दिरमार्गं दर्शय ।

कञ्चु—जहा णिदेसो (यथा निदेशः) इदो इदो भद्दा । (इत इतो भद्रौ) ।

भास्क—(सहवयस्यो निष्क्रान्तः)

कासा—सर्वत्र शरणमस्माकं मुरहररमणीचरणारविन्दमेव । अस्याः खलु

अपाङ्गः कारुण्यामृतरसभृतो यत्र लगति
क्षणाद्दूरे तस्माद्भवति विपदार्तिश्च महती ।
मनोऽभीष्टं सर्वं भुवि समधिगम्याऽथ स कृती
हरौ भक्तिं बिभ्रत् तृणमिव दिवञ्चाकलयति ॥

(इति निष्क्रान्तः)

इति श्रीपद्मिनीपरिणये द्वितीयोऽङ्कः ।

## ॥ अथ तृतीयोऽङ्कः ॥

(ततः प्रविशतश्चेट्यौ)

**प्रथमा**—सहि कहिं तुमम् ? (सखि क्व त्वम् ?)

**द्वितीया**—उज्जाणमज्झघरवासिणो कस्स वि राअकुमारस्स परिअरणकिदे णिउत्ताए भट्टदारिआसहीए भमरिआए पिअसही महुव्वदा णिउत्ता णिरन्तरं अरुणस्स णिदेशआरिणी होहित्ति । अहं ताए पस्सवट्टिणी होम्मि । दाणिं ताए णिदेस्सादो घणसारमिअमदमिस्सचन्दणं गण्हिअ तत्थ गच्छेमि । तुमं उण कहिम् ? ।

(उद्यानमध्यगृहवासिनः कस्यापि राजकुमारस्य परिचरणकृते नियुक्तया भर्तृदारिकासख्या भ्रमरिकया प्रियसखी मधुव्रता नियुक्ता 'निरन्तरमरुणस्य निदेशकारिणी भ'वेति । अहं तस्याः पार्श्ववर्तिनी भवामि । इदानीं तस्या निदेशात् घनसारमृगमदमिश्रं चन्दनं गृहीत्वा तत्र गच्छामि । त्वं पुनः क्व ? )

**प्रथमा**—अहं उज्जाणवसन्तमण्डपगताए भमरिआए अन्तेउरट्ठिदं चित्तपडं आणेहित्ति पेसिदा तं गण्हिअ तत्थ गच्छेमि ।

(अहं उद्यानवसन्तमण्डपगतया भ्रमरिकया 'अन्तःपुरस्थितं चित्रपटमान'येति प्रेषिता तं गृहीत्वा तत्र गच्छामि ) ।

**द्वितीया**—कस्स किदे ? (कस्य कृते ? )

**प्रथमा**—भट्टदारिआ कस्सिं वि तरुणम्मि अणुरत्ता जीमूआदो विरदा अ अहिअं चिन्ताउलत्ति मण्णे । ताए आसासणकिदे सही एदं आणेदित्ति तक्केमि ।

( कस्मिन्नपि भर्तृदारिका तरुणेऽनुरक्ता जीमूताद्विरता चाधिकं चिन्ताकुला इति मन्ये । तस्या आश्वासनकृते सखी एतमानयतीति तर्कयामि) ।

**द्वितीया**—सो राअकुमारो हि सरिसो भट्टदारिआए ।
(स राजकुमारो हि सदृशो भर्तृदारिकायाः)

**प्रथमा**—इमस्सिं लिहिदो किं सो भवे ? (अस्मिन्लिखितः किं स भवेत्) । (इति चित्रपटं दर्शयति ) ।

**द्वितीया**—(वीक्ष्य) एत्थ सो एव्व । (अत्र स एव)

**प्रथ**—म्महो खु एत्थ लिहिदो । (मन्मथः खल्वत्र लिखितः)

**द्विती**—णो वट्टइ इमस्स करे इच्छुचाओ (नो वर्ततेऽस्य करे इक्षुचापः)

**प्रथ**—किं केसवो ? (किं केशवः ? ) ।

**द्विती**—णो दीसइ हत्थे चक्कम् (नो दृश्यते हस्ते चक्रम् )

**प्रथ**—अत्थि खु हत्थे चक्कम् (अस्ति खलु हस्ते चक्रम् )

**द्विती**—सा चक्करेहा खु । (सा चक्ररेखा खलु)

**प्रथ**—अच्चरिअं फुप्फबाणमेत्तहीणो एसो मअणो । चक्काउहमेत्तहीणो माहवो ।
(आश्चर्यं पुष्पबाणमात्रहीन एष मदनः । चक्रायुधमात्रहीनो माधवः । )

**द्विती**—अह्माणं भाअहेअं एव्व इमिणा रूपेण उवट्ठिदम् ।
(अस्माकं भागधेयमेवानेन रूपेणोपस्थितम् ) ।

**प्रथ**—तुमं केण वि उवाएण तं महाभाअं एदाए पुरो करेहि ।
(त्वं केनाप्युपायेन तं महाभागं एतस्याः पुरः कुरु ) ।

**द्विती**—अत्थु, गच्छेम (अस्तु गच्छावः) ।

॥ प्रवेशकः ॥

(ततः प्रविशति वयस्यानुगतो भास्करः)

**भास्क**— **जीमूते विमुखोऽपि भूपतिरसौ दाक्षिण्यमालम्बते**
**कासारो यदनर्पणे हृदय किं तां द्रष्टुमुत्कण्ठसे ? ।**
**उत्कण्ठामथवा भजस्व तरुणीचेतोऽवगन्तुं यतः**
**पुंसो यस्य वपुस्तदीयहृदयं प्रीणाति धन्योऽत्र सः ॥**

**अरुणः**—(स्वगतम् ) अभ्यधायि खलु मधुव्रतया साम्प्रतमुद्यानमण्डपमधिवसति पद्मिनीति । ततस्तां करोमि वयस्यनेत्रयोरतिथिम् । (प्रकाशं) सखे समन्तात्पश्यावः **प्रमदावन-श्रियम्** । (परिक्रामतः) ।

**भास्क**—सखे !

**जग्ध्वा तृणाङ्कुरचयं हरिणाः प्रियाभिः**
**पीत्वा पयोऽतिविमलं विचरन्ति हृष्टाः ।**

छायासु चम्पकपटीरमुखद्रुमाणां
जानन्ति जातु नहि कश्चन तापमेते ॥

**(प्रविश्य) चेटी**—अज्ज इदो अदूरे वट्टइ कावि पदुमिणि सा दस्सणिज्जा ।
( आर्य ! इतः अदूरे वर्तते कापि पद्मिनी । सा दर्शनीया ) ।

**अरु**—हञ्जे, सा केन पथा अधिगन्तव्या ?

**चेटी**—इदो उभअपस्सविलसंतपूअतरुवेल्लिअतंबूल्लदामणोहराए पदवीए गन्तव्वम् ।
( इतः उभयपार्श्वविलसत्पूगतरुवेल्लिततांबूललतामनोहरया पदव्या गतव्यम् )
( इति निर्दिश्य निष्क्रान्ता )

**भास्क**—सखे ! चञ्चद्बालसुधांशुसन्निभदलश्रेणीनिकामस्फुरत्-
ताम्बूलीपरिरब्धपूगविटपिप्रद्योतिपार्श्वद्वया ।
चेतो मे हरतीयमत्र पदवी क्रीडायनान्तस्थली-
सीमन्ताकृतिरुज्ज्वला रतिपतेर्लीलाविहारक्षमा ॥

गभीरतरतो ह्रदात्प्रसृतमत्र कुल्यान्तरे
निरन्तरमिदं विशत्तरुतलालवालं जलम् ।
विभाति परितो वनान्तरतले स्वतश्श्यामले
रजोभिरमलैस्सितैः रचितरङ्गवल्ली यथा ॥

**अरु**— दूरतो लसति शाद्वलो दृशोः कोमलोऽत्र पशुवर्गरक्षितः ।
पञ्चबाणविहृतिक्षमा कुथा श्यामलेव परितस्समास्तृता ॥

**भास्क**--पश्य पश्य !

पचेलिमफलैर्हृद्यैर्भासते लिकुचावलिः ।
कुचैरभिनवोत्पन्नैः कुमारीणामिवावलिः ॥

**अरु**— फलेन लिकुचावलेः स्मृतिपथं नवोढाकुचौ
प्रवेश्य शुभदाडिमीफलभरेण मध्यास्तनौ ।
वनी विरहिणां मनो व्यथयति प्रगल्भाङ्गना-
पयोधरघटौ फलैरहह नालिकेरोद्भवैः ॥

**भास्क**—(निरूप्य)

कुसुमनिकरदीव्यद्वीरुदाच्छाद्यमाना
विटपितटविचश्वत्पञ्जरान्तस्थितानाम् ।
शुकपिकमुखनानापत्रिणां हृद्यवाचां
ततिभिरुपवनान्तर्भासते भद्रशाला ॥

अरु—तत्र दृश्यते कापि युवतिः सह सहचर्या ।

भास्क—सखे मार्गान्तरेण गत्वा वृक्षान्तरितौ जानीवः क्रमादेते । (उभौ परिक्रम्य तथा स्थितौ)

( प्रविशति मकरिकया सह पद्मिनी )

पद्मि—हला, कहं विणोदो मए मअणसरतावतत्ताए? (कथं विनोदो मम मदनशरतापतप्तायाः)

भास्क— शरीरविसरद्रुचा विजितचारुचामीकरा
सुरालयकचाकचिक्षमकुचा पयोभृत्कचा ।
सुशारदनिशाधिपक्षतिविशारदस्वानना
दृशा कृतकुशेशयावमतिरेति शातोदरी ॥

हृदि न वहतु सत्यामुर्वशीगर्वलेशं
त्यजतु झटिति रम्भा विभ्रमारम्भमस्याम् ।
व्रजतु विरतिमेव स्वावलेपाद्रतिस्सा
युवतिषु गणनीया मेनका मे न कापि ॥

अरु—सखे! कासारसंभवां पद्मिनीमेनां मन्ये ।

भास्क—कः संशयः ।

अम्भोनीलीचिकुरनिकरा मीननेत्रा मृणाली-
बाहुद्वन्द्वा सरसिजकरा चक्रवाकस्तनीयम् ।
कम्बुग्रीवा द्युतिभरजलस्रोतसा पूर्यमाणा
मन्ये धात्रा मदनसरसी केलये निर्मितेति ॥

भ्रम—स हि! उपविसामो । (सखि! उपविशावः) । (उभे उपविशतः) ।

भ्रम—स हि! एदं चित्तपडं पेक्खंती विणोदेहि अत्ताणअम् ।
( सखि एतं चित्रपटं प्रेक्षमाणा विनोदयात्मानम् ) । (इत्यर्पयति पटम् )

**भास्क**—सखे ! को वा लिखितश्चित्रपटे ।

**अरु**—अस्या हृदयदयित एव स्यात् ।

**भास्क**—को वा महाभागो हृदयदयितोऽभूदस्याः ?

**पद्मि**—(चित्रं प्रति) तुमं एव्व महाभाओ तिहुवणे । (त्वमेव महाभागस्त्रिभुवने) ।

**अरु**—ददात्युत्तरं पद्मिनी ते ।

**भास्क**—वयस्य ! जीमूताय दास्यति कासारस्सारसाक्षीमेनामिति श्रूयते ।

**पद्मि**—महाभाअ जणओ मं जदि जीमूदस्स वितरस्सइ सज्जो ण जीविदं धारइस्सम् । (महाभाग जनको मां यदि जीमूताय वितरिष्यति सद्यो न जीवितं धारयिष्यामि) ।

**अरु**—वयस्य ! किं सुधाकरं विना विभावरी कामयते धूमकेतुम् ?

**भ्रम**—मा चिन्तेहि, जीमूअवसं ण गमिस्ससि, जदो सो राअकुमारो एत्त समाअदो सुणीअदी। (मा चिन्तय, जीमूतवशं न गमिष्यसि, यतः स राजकुमारः अत्र समागतः श्रूयते।)

**भास्क**—स को नाम राजकुमारः ? ।

**पद्मि**—(चित्रं प्रति) तुमं एव्व लोअपदीवो (त्वमेव लोकप्रदीपः) ।

**अरु**—सखे ! भवानयिश्च किं परोक्षमुचितमालपाव इति प्रतिजानाथे स ।

**पद्मि**—तुह हि !—(तव खलु !) ।

**मुहं राआचन्दं परिहसइ णेत्तं जलरुहं**
**भुओ सुण्डादण्डं दसणवसणं विद्दुमफलम् ।**
**गलो सङ्खाआरं करअलजुअं पल्लवदलं**
**णहो जोण्हं जाणू मुउरअलसोहं पिअतम ॥**

[ मुखं राकाचन्द्रं परिहसति नेत्रं जलरुहं
भुजश्शुण्डादण्डं दशनवसनं विद्रुमफलम् ।
गलश्शङ्खाकारं करतलयुगं पल्लवदलं
नखो ज्योत्स्नां जानू मुकुरतलशोभां प्रियतम ॥ ]

**भास्क**—सखे ! को नाम तादृशः ।

**भ्रम**—(चित्रं प्रति) तुमं एव्व सरिसो सहीए । (त्वमेव सदृशस्सख्याः) ।

**अरु**—मया भणितव्यं भ्रमरिकेयमभाणीत् ।

**भास्क**—सखे! मामेव किं मन्यसे चित्रविन्यस्तम्?

**अरु**—न शङ्का मम ।

**भास्क**—(स्वगतम्) यदीयमाकृतिः पद्मिनीमनोहरा, ततः को नाम युवा भास्करादन्यः ।

(प्रकाशम्) **अम्भोरुहेण वदनं विततान वेधा**
**नीलोत्पलेन नयनं स्तबकेन कौचित् ।**
**दन्तांश्च कुन्दमुकुलैरधरं जपाभि-**
**र्नोचेत्कथं मम लगेदिह चित्तभृङ्गः ॥**

**पद्मि**—हला, चित्तपडदस्सणप्पहुदि (चित्रपटदर्शनप्रभृति)

**परुसो परहुदणादो पवणो मन्दो पवाइ अच्चुण्णो ।**
**जोह्ना आदवसरिसी किं कादव्वं सहेमि णो दावम् ॥**

(परुषः परभृतनादः पवनो मन्दः प्रवाति अत्युष्णः ।
ज्योत्स्ना आतपसदृशी किं कर्तव्यं सहे न तापम् ॥)

**भास्क**— **यस्मिन्नियं वहति मानसमीदृशेन**
**प्रेम्णा भृतं हरिणलक्ष्मणि रोहिणीव ।**
**दामोदरेऽर्णवसुतेव शशाङ्कचूडे**
**दाक्षायणीव स हि पुण्यवदग्रगण्यः ॥**

**भ्रम**—(चित्रं प्रति) तुमं एव्व पुण्णलोअग्गगणणिज्जो । तहा णो जदि कहं एव्वं तुमस्सिं एदाए हिअअं पच्चुत्तं भवे ।

(त्वमेव पुण्यलोकाग्रगणनीयः । तथा नो यदि कथमेवं त्वय्येतस्या हृदयं प्रत्युप्तं भवेत् ) ।

**पद्मि**—भो मअण! दुलअजणणिमित्तं मं किं पीडेसि,? अहवा जेण सरेण णिहओ विरहिजणो सज्जो लोअन्तरं गच्छेत् तं ममस्सिं मुंचेहि ।

(भो मदन! दुर्लभजननिमित्तं मां किं पीडयसि? । अथवा येन शरेण निहतो विरहिजनो सद्यः लोकान्तरं गच्छेत्, तं मयि मुञ्च) ।

**भ्रम**—भअवंत्सारदाणंदसंदिट्ठमग्गेण देविं लच्छि जदि आरहेसि किं दुल्लहो सो दयिदो।
(भगवच्छारदानन्दसन्दिष्टमार्गेण देवीं लक्ष्मीं यद्याराधयसि किं दुर्लभस्स दयितः)।

**भास्क**—सखे ! मनोरथो मे पल्लवित इव । यतोऽस्मद्गुरोश्शारदानन्दस्य प्रसादपात्रमेषापि । किञ्च दर्शनप्रभृति सुदत्याः स्फुरति मे वामेतरलोचनम् । अपि च ।

**साधारणीह गमने चरतां विमार्गे**
**सद्योऽङ्गना शशिमुखी सुपयोधराभा ।**
**तारावलीविलसिता पुरतो ममासी-**
**त्स्वीयात्पदान्मयि विनिस्सरति प्रयातुम्**[1] ॥

**पद्मि**—हला ! पाओ जीमूदो मं (हला ! पापो जीमूतो माम्-) (इत्यर्धोक्ते मूर्च्छति) ।

**भ्रम**—हला ! समस्ससिहि । (समाश्वसिहि) ।

**भास्क**— **मूर्च्छानिमीलिताक्षी स्तब्धाङ्गी वाचि मुद्रिता सुदती ।**
**मुकुलितपद्मा भ्रमरारवरहितेवाब्जिनी निवातस्था ॥**

(पद्मिनीं निषिञ्चति हिमवारिणा भ्रमरिका) ।

**पद्मि**—(आश्वस्य) हला ! किं जीवेसि मं मन्दभाइणिं जीविदणिरासं ? ।
(किं जीवयसि मां मन्दभागिनीं जीवितनिराशाम् ?) ।

**भ्रम**—सहि ! तुमं विणा कहं मह जीवणम् ? (सखि ! त्वां विना कथं मम जीवनम् ?) ।

**पद्मि**—केवलं अत्तणो सुहं अहिलसन्तो मं पीडेसि ! । (केवलमात्मनस्सुखमभिलषन्ती मां पीडयसि !)

**भास्क**—सखे ! अतिक्रामति सुभ्रुवो विरहसन्तापः । तथाहि,

**सख्या तापनिवारणाय करयोरग्रे मृणालीलता**
**विन्यस्ता वलयीकृता हरिमणीक्लृप्तेव संदृश्यते ।**
**शय्याऽम्भोजदलैः कृताऽऽतपभरम्लानेव सञ्जायते**
**धूमो देहनिषेचनप्रसृमरप्रालेयतोयादपि ॥**

1. विमार्गे चरतां दिटानाम् । पक्षिपथचारिणाञ्च । साधारणी स्वर्गवेश्या नभोरूपयुवतिश्च । प्रयाण-काले वेश्याभिगमनं शुभनिमित्तमिति प्रसिद्धम् । तारावली हारविशेषः नक्षत्रपंक्तिश्च ।

**पद्मि**—हला! एत्थ विणोदकिदे आअदं मं अहिअं पीडेइ उज्जाणं कण्णकठिणेहिं कोइल-
णादेहिं णअणदुद्दस्सेहिं पुप्फणिअरेहिं, देहतावकरेहिं सुरहिवादेहिं वि।

(अत्र विनोदकृते आगतां मां अधिकं पीडयति उद्यानं कर्णकठिनैः कोकिलनादै-
र्नयनदुर्दर्शैः पुष्पनिकरैः देहतापकरैः सुरभिवातैरपि)।

**भास्क**—सत्यमेतत्!

पुष्पेषोस्तरवारिसञ्चयरुचिं चूतद्रुमे पल्लवो
धत्तेऽयं स्तवको नवोऽत्र नलकाभां नालिकेरद्रुषु।
तत्रैवाकलनीयवृत्तगुलिकाशोभाश्च धात्रीफलं
सज्जेष्वासधुगमगस्त्यमुकुलं भल्लश्रियं कैतकम्॥

**अरु**—(ऊर्ध्वमवलोक्य) सखे! किमिदं धूमधूसरितं गगनं लक्ष्यते।

**भास्क**—(विलोक्य) पश्य! मायाकल्पितं व्योमयानं आपतति।

**अरु**—सखे! पद्मिनीविप्रलम्भाय समुत्पतितमेतदिति मन्ये।

**भास्क**—तत् त्वरितं निवेशनाच्छरासनमानय।

**अरु**—तथा। (इति निष्क्रान्तः)।

(आकाशे यन्त्रयानारूढो हिमान्या सह तुहिनमण्डलः)।

**तुहि**—प्रिये! दृश्यते पद्मिनीयमुद्याने। भवती भवतु अवहितचित्ता, यावदेतामपहरामि।
(धरण्यामवरुह्य)

**हिमानी**—होदु (भवतु)।

**पद्मि**—हला! कोवि पुरिसो अत्थिमालाभूसणभीसणो तुवरिअं गअणादो अहिधावइ।
(कोऽपि पुरुषोऽस्थिमालाभूषणभीषणस्त्वरितं गगनादभिधावति)।

**भ्रम**—हद्धि हद्धि। (हा धिक्, हा धिक्)।

**पद्मि**—दाणिं मं को णाहो रक्खिस्सदि?। (इदानीं मां को नाथो रक्षिष्यति?)
(इति पलायिते)

**भास्क**— कः पद्मिनीं गुणवतीं परिभावयितुं भुवीह शक्नोति।
तां भास्करे निकामं रक्षितुकामे विरोधिनां भीमे?॥
(इति निवारयति तुहिनमण्डलम्)

**भ्रम**—हला ! मा धावेहि । समाअदो सो महाणुहावो तुमं रक्खिदुम् ।
(मा धाव ! समागतस्स महानुभावस्त्वां रक्षितुम् ) ।

**पद्मि**—(परावृत्य पश्यति)

**भास्क**— वित्रस्तमुग्धहरिणीनयनां भयेन
तां कम्पमानकुचकुम्भयुगां प्रियां मे ।
सम्पश्यतो हृदयमप्यभियातिमेतं
शृङ्गारवीररसयोः समुपैति काष्ठाम् ॥

**तुहि**—किं मां रुणत्सि ? पश्य मे प्रतापम् ।

**भास्क**—तुच्छ ! किं जल्पसि दीनजनमात्रदुस्सहप्रसर ?

**पद्मि**—हला ! इदो परं णत्थि भअम् । तदो रुक्खन्तरे लीणाओ पेक्खम्मो दइदविलसिदम् ।
(इतः परं नास्ति भयम् । ततो वृक्षान्तरे लीने प्रेक्षावहे दयितविलसितम् ) ।

**भ्रम**—दिट्टिए दिट्ठो महाप्पहाओ ! । (दिष्ट्या दृष्टोऽयमहाप्रभावः ? ) (इति पादपान्तर्हिते स्थिते)

**हिमा**—हद्धि ! हे । को वि बालो मह दइदं अहिक्खिवइ । (हा धिक् ! कोऽपि बालो मम दयितमधिक्षिपति) ।

**तुहि**—रे जाल्म, किं कथयसि ?

उद्वेजयामि जनतां यदि सम्प्रवृत्तो
भूमीभृतोऽत्र महतोऽपि तिरस्करोमि ।
पीडामतीव जनयामि च विप्रयोगि-
चित्तेषु कोऽस्ति सदृशो भुवनत्रये मे[1] ? ॥

**हिमा**—मन्द ! पिओ मे किं तुमं विमुञ्चे ? । (मन्द ! प्रियो मे किं त्वां विमुञ्चेत् ? ) ।

**पद्मि**—हला ! मम किदे पियस्स किं वि भवेत्ति वाउलंहि । (हला ! मम कृते प्रियस्य किमपि भवेदिति व्याकुलाऽस्मि) ।

**भ्रम**—न किं वि भवे । (न किमपि भवेत्)

1. भूमीभृतः गिरिन् राज्ञश्च । विप्राश्च योगिनश्च, तेषां चित्तेषु ।

**भास्क**—रे [1]कापालिकापशद! लोकाधरमातङ्गणकारिन्! नाथवियुक्ताबलाजनहिंसक! हसन्ती-वञ्चितप्रभाव! तिष्ठ पुरतो मे।

[2]करप्रतापः प्रकटीभवेच्चेत् कश्शक्नुयाद्धीरतरोऽपि सोढुम्।
तमोमयोऽग्रे मम भास्करस्य स्थातुं भवादृक्तमोऽतितुच्छः? ॥

**पद्मि**—(सहर्षम्) हला! आकिदिसरिसो से पहावो। (हला! आकृतिसदृशोऽस्य प्रभावः)।

**हिमा**—हा! किं एदं अच्चाहिदं। (हा! किमेतदत्याहितम्)।

(प्रविश्य)

**अरु**—सखे! गृह्यतां [3]स्वधर्मः (इति ददाति चापम्)।

**भास्क**—(आदाय तमानमयन्)। हतक! पश्य, लभस्व भास्कराभिगमनफलम्।

**हिमा**—णाह! मा साहसं करेहि (नाथ! मा साहसं कुरु)।

**पद्मि**—अच्चरिअम्। (आश्चर्यम्)।

**अरु**— यावच्छरासनमसौ विनमय्य वेगात्
तीक्ष्णस्त्रगोनिकरमत्र किरत्यमन्दम्।

**हिमा**—हा! पिअ, किं गदोऽसि विवक्खवसम्? (हा! प्रिय, किं गतोऽसि विपक्षवशम्)।

**पद्मि**—सहि! दइदो दाणिं भीमो विअ। (सखि! दयित इदानीं भीम इव)।

**अरु**— तावत् पलायनपरो न्यपतद्विभिन्नः
पापस्स वज्रनिहतः शिखरीव भूमौ॥

**पद्मि**—(सामोदम्) हला! संवुत्तो दाणिं एसो मह जीविअदाई। (संवृत्त इदानीमेष मम जीवितदायी)।

**हिमा**—हा! णाह! असरणं मं उज्झिअ किं गदोऽसि लोअन्तरम्
(हा नाथ! अशरणां मां उज्झित्वा किं गतोऽसि लोकान्तरम्। (इति रोदिति।)

**पद्मि**—हला! संभावेम णाहम्। (हला संभावयाव नाथम्)। (इति भास्करमुपसरतः।)

1. कापालिकत्वात्, ब्राह्मणयोगिपीडाकरत्वम्। विप्रयोगिनो विरहिणश्च। लोकेऽधराः, अपकृष्टाः। लोकस्य दन्तच्छदश्च। हसन्ती हासकारिणी वनिता, हसन्तिकायन्त्रञ्च।

2. करः किरणः, हस्तश्च। तमोमयः जडः, ध्वान्तरूपश्च।

3. स्वधर्मः = निजचापः, हिमनिवारणरूपश्च।

**हिमा**—(सकोपम्) मुद्धे, पदुमिणि! तुह किदे म्ह णाहो जदो मिच्चुं गदो तदो जहाकहं वि तुमं ओहरिअ संहरिस्सम्। (मुग्धे पद्मिनि! तव कृते मम नाथो यतो मृत्युं गतः ततो यथाकथमपि त्वामपहृत्य संहरिष्यामि)।

**भास्क**—किं प्रलपसि?। (इति गृह्णाति बाणम्)।

**पद्मि**—अज्ज, इत्थिआ खु!। (आर्य स्त्री खलु!)।

**हिमा**—(यन्त्रयानेन पलायमाना निष्क्रान्ता)।

**भास्क**—(चापमवरोपयन्) सखे! सफलमासीदिहाभिगमनम्।

**अरु**—लब्धं भवता रमणीजनरक्षणपुण्यम्।

**भास्क**—सर्वं शारदानन्दमहिम्ना।

**पद्मि**—(अप) सहि! कहिदव्वं कहेहि। (सखि! कथयितव्यं कथय)।

**भ्रम**—अज्ज! तुए जीविदं पाविदा मह पिअसही कं दे पच्चुपआरं करिस्सदि। (आर्य, त्वया जीवितं प्रापिता मम प्रियसखी कं ते प्रत्युपकारं करिष्यति)।

**अरुणः**—यत्कन्यकाजनेन महोपकारिणो यूनः कुलीनस्य करणीयं तत्करोतु तव प्रियसखी। (इति भास्करहस्ताच्चापं आदाय मन्दमपसरति)।

**भ्रम**—सहि! संभमादो तत्त णिक्खित्तं चित्तपडं गहिस्सम्। (सखि संभ्रमात्तत्र निक्षिप्तं चित्रपटं ग्रहीष्यामि)। (इत्यपसरति)।

**पद्मि**—(स्वयमपि गन्तुमिव प्रवर्तते)।

**भास्क**—भद्रे! मा भैषीः। (इत्युपसरति)।

**पद्मि**—(सलज्जमपसरतीव)।

**भास्क**—(अनुसृत्य गृह्णाति वसनाञ्चलम्)।

(नेपथ्ये कलकलः)

**पद्मि**—अज्ज! आअच्छदि विअ मं रक्खिदुं तुहिणमण्डलादो चउरङ्गसेना। तदो मं मुंचेहि। (आर्य! आगच्छतीव मां रक्षितुं तुहिनमण्डलात् चतुरङ्गसेना। ततो मां मुञ्च)।

(इति निष्क्रान्ता)

**भास्क**—(मदनबाधां निरूपयन्)

विसृज मयि यथेच्छं मन्मथ त्वं पृषत्कान्
त्वयि कथमपराधो दैवमेवाद्य वाच्यम् ।
त्वरितममृतवापीं द्राङ्मिमंक्षाऽवतीर्णे
मयि हि तिरयति स त्यक्तकारुण्यमेनाम् ॥

(सानुस्मरणम्) प्रयान्त्या तया मयि समाविष्कृतोऽनुरागः ।

तथाहि—गत्वा पदानि कतिचित्कमलायताक्षी
नेत्रातिवर्तिपदसन्निहितैकपादा ।
आसिञ्चति स्म वलितं गलमारचय्य
तादृक्कटाक्षसुधया प्रणयादियं माम् ॥

भवतु भावज्ञं सखायमुपगम्य केनाप्युपायेन लब्धप्रियतमाभूयोदर्शनो भविष्यामि ।

(इति निष्क्रान्ताः सर्वे)

॥ इति पद्मिनीपरिणये पद्मिनीभास्करावलोकनं नाम तृतीयोऽङ्कः ॥

## ॥ अथ चतुर्थोऽङ्कः ॥

(ततः प्रविशति मधुव्रता । परिक्रम्यावलोक्य च) ।

**मधुव्रता**—दिट्‌ठिए विइदा सहि आअच्छइ । (दिष्ट्या विचिता सखी आगच्छति) ।

(प्रविश्य)

**भ्रमरिका**— अच्चरिअम् । (आश्चर्यम्) ।

**मधु**—हळा ! मं सविहवट्टिंगि वि कुदो न पेक्खसि? अहवा तारिसो तुमस्सिं राअवुत्तीसिणेहो ।
(मां सविधवर्तिनीमपि कुतो न पश्यसि ? अथवा तादृशस्त्वयि राजपुत्रीस्नेहः) ।

**भ्रम**—सहि मा कुप्पेहि । किं वि अच्चरिअम् पेक्खिअ परवसाह्मि ।
(सखि ! मा कुप्य । किमप्याश्चर्यं प्रेक्ष्य परवशाऽसि) ।

**मधु**—किं दं ? (किं तत् ?)

**भ्रम**—शारआणन्दसिस्सस्स तुहिणमण्डलंमि विक्कमविलसिदम् ।
(शारदानन्दशिष्यस्य तुहिनमण्डले विक्रमविलसितम् ) ।

**मधु**—रण्णा पेसिदा खु तं कावाळिअं जेदुं सेणा ! ।
(राज्ञा प्रेषिता खलु तं कापालिकं जेतुं सेना !) ।

**भ्रम**—गअणचारिणि तस्सिं तिरोहिअरूअे सेण्णं किं करिस्सदि ! ।
(गगनचारिणि तस्मिन् तिरोहितरूपे सैन्यं किं करिष्यति ?) ।

**मधु**—तत्थ गदा सेणा किं विफळा आसि । (तत्र गता सेना किं विफलासीत् ?)

**भ्रम**—सेणागमणादो पुव्वं एव्व कावाळिअं जेदुण रक्खिदा पिअसही तेण महाभाएण ।
(सेनागमनात्पूर्वमेव कापालिकं जित्वा रक्षिता प्रियसखी तेन महाभागेन) ।

**मधु**—हळा ! तं तारिसं पेक्खन्तीए पदुमिणीए मणं केरिसम् ? ।
(हळा ! तं तादृशं प्रेक्षमाणायाः पद्मिन्याः मनः कीदृशम् ?) ।

**भ्रम**—सुबाहुवहकारिणि रामभद्दे जानईहिअअं केरिसम् ! ।
(सुबाहुवधकारिणि रामभद्रे जानकीहृदयं कीदृशम् !)

**मधु**—जुत्तम् । (युक्तम् )

भ्रम—किं जीमूओ आअदो ? । (किं जीमूत आगतः ?)

मधु—सो पावो दहमुहो विअ परिणेदुं जाणइं अहिलसन्तो आअदो ।
(स पापः दशमुख इव परिणेतुं जानकीमभिलषन्नागतः) ।

भ्रम—अदो एव्व सही अहिअं वाउला । (अत एव सखी अधिकं व्याकुला.) ।

मधु—देव्वप्पसादादो ताए मणोरहो सिज्झउ । (दैवप्रसादात् तस्या मनोरथस्सिध्यतु ।

भ्रम—(सप्रत्यभिज्ञम्) दिट्ठिए सुमरिअम्हि सही ळच्छीसमाराहणे पउत्ता मं अन्तेउरट्ठिदं पडिमं आणेहित्ति आणत्तवई खु । ता गमिस्सम् । तुमं पुण कहिं पत्थिआः ।

(दिष्ट्या स्मारिताऽसि । सखी लक्ष्मीसमाराधने प्रवृत्ता मां 'अन्तःपुरस्थितप्रतिमां आन'येति आज्ञप्तवती खलु, तस्मात गमिष्यामि । त्वं पुनः क प्रस्थिता ?)

मधु—तुए समं किंवि मन्तेदुम् । (त्वया समं किमपि मन्त्रयितुम्) ।

भ्रम—कहेहि (कथय) ।

मधु—जेणकेणवि उवाएण भक्खरो पदुमिणीए जोअणीज्जोत्ति पत्थिदह्मि अरुणेण । तत्थ को उवाओ कादव्वोत्ति ।

(येनकेनाप्युपायेन भास्करः पद्मिन्या योजनीय इति प्रार्थितास्मि अरुणेन । तत्र क उपायः कर्तव्य इति ) ।

भ्रम—एदेण अरुणवअणेण सो तरुणो पदुमिणीनिमित्तं मअणेण अहिअं पहरीअदित्ति मुणेमि ।

(एतेन अरुणवचनेन स तरुणः पद्मिनीनिमित्तं मदनेनाधिकं प्रह्रियत इति जानामि ) ।

मधु—को संसओ ? (कस्संशयः ?) । (संस्कृतमाश्रित्य) ।

एष खलु श्वसिति दीर्घतरं परिताम्यति प्रतिवचः प्रददाति न चेरितः ।
क्वचन दिश्यभिधावति मत्प्रिये दिशि कटाक्षमवेति मुहुर्वदन् ॥

भ्रम—(विचिन्त्य) तत्थ एसो उवाओ । पुढमं सिविआए ळच्छीपडिमं आरोविअ तस्स पडिमादस्सणववदेसेण नेदूण सविहं णिऊडं तं वि तत्थ णिवेसिअ परेहिं अविदिअं पूआघरं पावइस्सम् ।

(तत्रैष उपायः । प्रथमं शिबिकायां लक्ष्मीप्रतिमामारोप्य तस्य प्रतिमादर्शनव्यपदेशेन नीत्वा सविधं निगूढं तमपि तत्र निवेश्य परैरविदितं पूजागृहं प्रापयिष्यामि ) ।

**मधु**—साहु चिन्दिअम् । तत्थ णिऊडं पूआसमए ठाऊण तदो ळहेदु मणोरहं भद्दो ।
(तत्र निगूढं पूजासमये स्थित्वा ततो लभतां मनोरथं भद्रः) । (इति निष्क्रान्ते)

॥ विष्कम्भः ॥

(ततः प्रविशति पद्मिनी)

**पद्मि**—हञ्जे! दीपजादं सव्वं उद्दीवेहि । (हञ्जे! दीपजातं सर्वं उद्दीपय) ।

**चेटी**—जहा आदिसइ भट्टदारिआ । (यथाऽऽदिशति भर्तृदारिका) ।

(उद्दीपयति दीपान्)

**पद्मि**—(स्व) देवीसमाराहणस्स किदे वल्लहादो णिवट्टिदं वि हिअअं पुणोवि धावइ तस्सिम । किं करिस्सम्? । (देवीसमाराधनस्य कृते वल्लभान्निवर्तितमपि हृदयं पुनरपि धावति तस्मिन् । किं करिष्यामि ?) । (नेपथ्ये वाद्यरवः) ।

**पद्मि**—सही भमरिआ देवीपडिमं आणेदि । (सखी भ्रमरिका देवीप्रतिमां आनयति) ।

(प्रविशति शिबिकां पुरस्कृत्य भ्रमरिका)

**पद्मि**—हळा! कुदो विळंबो? । (हळा! कुतो विलम्बः ?) ।

**भ्रम**—तस्स राअउमारस्स पडिमासण्णिहावणकिदे ।
(तस्य राजकुमारस्य प्रतिमासन्निधापनकृते) ।

**पद्मि**—किं अत्थि तस्स कोऊहळं पडिमादस्सणे? । (किमस्ति तस्य कौतूहलं प्रतिमादर्शने ?) ।

**भ्रम**—ण केवळं पडिमादस्सणे? । किंदु पूआदस्सणे पूआफळळाहे अ ।
(न केवलं प्रतिमादर्शने किन्तु पूजादर्शने पूजाफललाभे च) ।

**पद्मि**—होदु, किं कादव्वम् । (भवतु किं कर्तव्यम्) ।

**भ्रम**—(संस्कृतमाश्रित्य)

**अन्तर्हितोऽभूत्सखि भास्करोऽद्य स्नाहि प्रदीपं पुरतो निधाय ।**
**दिव्यासनेऽहं प्रतिमां निधाय माल्यैश्च भूषाभिरलङ्करिष्ये ॥**

**पद्मि**—हळा! चित्तदस्सणेण किदवीअविण्णासो दइदस्स आअमणसवणेण अंकुरिदो पच्छक्खवाकळोअणेण फलविदो तुहिणमण्डलसंहारेण कुसुमिदो मह मणोरहरुक्खो कधा फळिस्सदि? । (सखि! चित्रदर्शनेन कृतबीजविन्यासः, दयितस्यागमनश्रवणेन

अङ्कुरितः,प्रत्यक्षावलोकनेन पल्लवितः, तुहिनमण्डलसंहारेण कुसुमितो मम मनोरथवृक्षः कदा फलिष्यति ? ) ।

**भ्रम**—हळा ! देविं आराहेहि । तक्खणं तुह मणोरहो फळिस्सदि । (हळा ! देवीमाराधय, तत्क्षणं तव मनोरथः फलिष्यति) ।

**पद्मि**— अत्थु (अस्तु) । (इति स्नातुं निष्क्रान्ता) (भ्रमरिका शिबिकाद्वारमुद्घाटयति) ।

**भ्रम**—अज्ज, णिग्गमिअ पूआभवणं पेक्ख । (आर्य निर्गम्य पूजाभवनं पश्य) ।

(भास्करः शिबिकान्तरान्निर्गत्य)

अहो पूजासदनरामणीयकम् ! ।

उपरि शुभविचित्रोल्लोचमध्यप्रलम्बि-
स्फुरदमलसुवृत्तोद्दीप्तमाणिक्यगोळैः ।
कनकमणिविलासिस्तम्भसंलग्नबिम्बै-
रिव सुजनितजीवैर्नैवमेतद्विनोति ॥

अपि च, मृगमदतुहिनाम्भोमिश्रिते स्निग्धरूपे
नवमलयजपङ्के मालतीमाल्लिकासु ।
विसरदगरुधूपे संलुठन् वातपोत-
श्चरति परित एष प्रीणयन् नासिकां मे ॥

(भ्रमरिका प्रतिमां गृहीत्वा प्रतिष्ठाप्य कनकपीठे परिष्करोति) ।

**भास्क**—अहो ! सर्वपथीना भ्रमरिकाचातुरी, यद्राजतेतरामनयाऽलङ्कृता भगवती गरुडध्वज-प्रणयिनी । यैषा,

उत्तानवामपदजानुकृतैकहस्ता
पाणौ परत्र दधती नलिनं तदन्यम् ।
पादं प्रसारितवती विनिकुञ्च्य किञ्चित्
सम्भूषिता मणिकिरीटमुखैरनर्घैः ॥

**भ्रम**— अज्ज ! इदो उत्तरभाअवट्टिसाळन्तरं पविसिअ तिरोहिदो वाताअणेण पिअसहीपउत्तिं आळोएहि । (आर्य ! इत उत्तरभागवर्तिशालान्तरं प्रविश्य तिरोहितः वातायनेन प्रियसखीप्रवृत्तिमालोकय ) ।

**भास्क**— (तथा भूत्वा स्थितः) ।

**भ्रम**— (नेपथ्याभिमुखं पश्यन्ती स्थिता) । (पद्मिनी स्नाता धृतदुकूला प्रविशति) ।

**भ्रम**— सहि ! सव्वा पूआसामग्गी सज्जीकिदा । पीठे उवविसिअ पूएहि लोअजणणिम् ।
(सखि । सर्वा पूजासामग्री सज्जीकृता । पीठे उपविश्य पूजय लोकजननीम् ।

**पद्मि**—(उपविशति)
(भास्करः जालरन्ध्रेण विलोकयन् साञ्जलिबन्धं प्रणम्य)

देवीं सुपर्वपतिदिङ्मुखमीक्षमाणां
लक्ष्मीं धनाधिपहरिद्वदनं निषण्णा ।
भक्त्याऽर्चने प्रणिहिता प्रतिभाति सुभ्रू-
र्मूर्तिः श्रियो मुकुरदृश्यतया स्थितेव ॥

**पद्मि**—हळा ! मअणस्स विरहिजणं पहरिदुं किं काळणिअमो णत्थि । जं तस्स एव्व जणणिं पूएदुं पउत्तं मं णिस्संकं ताडेइ सरेहिम् । (हला ! मदनस्य विरहिजनं प्रहर्तुं किं कालनियमो नास्ति, यत्तस्यैव जननीं पूजयितुं प्रवृत्तां मां निश्शङ्कं ताडयति शरैः) ।

**भ्रम**—पणिहिअचित्ता होहि । (प्रणिहितचित्ता भव) ।

**पद्मि**—(तथा भूत्वा पूजयति)

**भास्क**—अहो सर्वत्र नैपुणी हरिणीदृशः !

उदधिदुहितृपूजाकर्म संकल्प्य पूर्वं
शिरसि वदनपद्मे वक्षसि न्यस्तहस्तम् ।
किमपि किमपि चञ्चत्पक्वबिम्बाधरोष्ठं
स्फुरितरुचिरमन्त्रं पीठमभ्यर्चतीयम् ॥

परस्परामिश्रितशुद्धवर्णं प्रत्यक्षरार्थानुगतान्तरङ्गम् ।
मन्त्रं जपन्ती महिलामणीयं मुहुः कराभ्यां विवृणोति मुद्राः ॥

(पद्मिनी ध्यानं नाटयति)

**भास्क**— रमणीयमर्धविनिमीलितेक्षणा कुसुमं समुद्धृतकरद्वयाञ्जलौ ।
रमणीयगन्धसलिलेन संयुतं विनिधाय चिन्तयति चेतसेन्दिराम् ॥

पथि—(संस्कृतमाश्रित्य)

मणिमयमासनम[illegible] [illegible] त्वं [illegible] साधु ।
मधुसूदनस्य दयिते मम हृदयं पादयोस्सदा कुरु ते ॥

भ्रम—मणोहरो सहिए देवीसमाराहणसंपदाओ । (मनोहरः सख्याः देवीसमाराधन-सम्प्रदायः)

पथि— प्रक्षालयामि [illegible] पद्मे [illegible] सद्भिः ।
प्रक्षालय कृपयाऽऽर्तिं त्वं मे मातः प्रदेहि सत्कीर्तिं ॥

अम्बुधिशायिकुटुम्बिन्यम्बु गृहीत्वा मयऽर्पितं न परम् ।
आचामतु तद् भवती वाचाऽगण्यं ममारिदर्पमपि ॥

स्नपयामि तेऽद्य मूर्तिं पयसाऽपाङ्गेन मे मनः स्नपय ।
मार्ज्मि मृदुवाससा त्वां मार्जय मे त्वं व्यथां प्रसादेन ॥

भास्क— आश्चर्यमिवाचार्यैरर्चनामात्रशिक्षिताम् ।
एतामवैमि पूजायां समीक्ष्य करकौशलम् ॥

पथि— परिकल्पयामि मातः परिधानं ते सदा धृतानन्दे ।
प्रतिगृह्य त्वं प्राप्यं कुरु मे पानाय दयितदन्तपटम् ॥

सुरभिलमपि ते गात्रं भूयस्सुरभीकरोमि गन्धेन ।
सुरभयनाशिनि देहं सुरभय मे[1] मे प्रियाङ्गसङ्गेन ॥

भास्क—सुदत्या भगवत्युपचारपरिपाटी प्रमोदयति मां प्रेमभरं प्रकाशयन्ती मयि सुतराम् ।

पथि— लाक्षारसेन पादौ रक्तावपि तेऽद्य रञ्जयामि पुनः ।
मातर्मयि रक्तमपि प्रियहृदयं कलय तूर्णमतिरक्तम् ॥

भास्क—हन्त । न जानाति प्रेयसी चेतो मे रतिभावस्य कोटिं परां यातम् ।

पथि— मञ्जीरं पादाब्जे म[illegible]लकाञ्चीं नितम्बबि[illegible] ते ।
अम्ब करे कलयेऽहं कङ्कणमेतन्ममावनाय धर ॥

1. हे मे = हे [illegible] ।

भ्रम—साहु पत्थणम् । (साधु प्रार्थनम्)

पद्मि— हारं हरिदयिते ते श्री॰। ग्रामप्राणि सुग्रीवे ।
अङ्गदमपि दोर्मूले मां गदहीनां विधेहानङ्गाम्ब ॥

कर्णे सुवर्णपत्रं कलयाम्यर्णोजमन्दिरेऽद्य तव ।
श्रवणं भूषय मे त्वं दयितकरोद्यत्सुवर्णपत्रेण ॥

चूडारत्नं नूत्नं शिरसि तवाहं समर्पयामि रमे ।
साभयमुद्रं कुरु मे मूर्ध्नि करं ते समुद्रशयकान्ते ॥

मृगमदतिलकं निटिले मृगमदहारिणि विलोचनप्रभया ।
कलयामि जलधिकन्ये कुलतिलकं तं कुरुष्व मदधीनम् ॥

मल्लीमाला मातर्धम्मिल्ले ते समर्पिताऽद्य मया ।
एषा भ्रश्यतु रहसि स्मरजनकस्यैव पाणिसंसर्गात् ॥

सुरभिं गृहाण धूपं सुरवन्द्ये मत्प्रदत्तमनुरूपम् ।
अम्बार्पयामि दीपं दीपय मे विद्विषि स्वकं कोपम् ॥

भास्क—साम्प्रतमभूतपूर्वशोभं पूजाभवनम् ।

सुरभि सुरभिसर्पिस्सेकदीप्तप्रदीपै-
रपि रुचिरसुगन्धापूरकर्पूरदीपैः ।
हरति हृदयमुच्चस्निग्धसाम्ब्राणिधूपै-
र्विविधसरसभक्ष्यैश्चाज्यदुग्धैरपूपैः ॥

पद्मि— भोज्यं भक्ष्यं लेह्यं प्राज्यं पेयश्च देवि मन्दोष्णम् ।
तुभ्यं निवेदयेऽहं लभ्यं सर्वं विधेहि दयितगृहे ॥

क्रमुकफलनागवल्लीमयवीटीयं सचूर्णकर्पूरा ।
दत्ता मुखे मया ते वदने शौरेरियं ततो लगतु ॥

भास्क—अहो मदिरेक्षणायाः शृङ्गारव्यतिकरमनोहरो हरिप्रणयिनीचरणसरोजभक्तिभावः ।

पद्मि—(उत्थाय)

दनुभवरिपुवक्षोनित्यवासैकदीक्षे
जननि सुजनसम्पद्दानजाग्रत्कटाक्षे ।

भवतु नतिरियं मे त्वत्पदाब्जे रमस्व
स्वजन इह मयि त्वं सर्वमागः क्षमस्व ॥

(इति प्रणमति) ।

भ्रम—सहि! पेक्ख पेक्ख, तुह सज्जो मणोरहसिद्धिसूअअं सुहणिमित्तं णिपदइ दीवादो तेओपुप्फम् । (सखि! प्रेक्षस्व प्रेक्षस्व, तव सद्यो मनोरथसिद्धिसूचकं शुभनिमित्तं निपतति दीपात्तेजःपुष्पम् )

भास्क—समाप्तैव सपर्या विपर्यासरहिता देव्याः मङ्गलदेवतायाः, यदियं वामेक्षणा निरीय पादोदकं निर्माल्यमादाय न्यस्यति चक्षुषोरुत्तमाङ्गे च ।

भ्रम—हळा! करेहि देविं परिदो जवणिअम् । (हला! कुरु देवीं परितो यवनिकाम्)

पद्मि—(तथा करोति)

भ्रम—हळा! मुहुत्तं एत्थ उवविसिअ विस्समदु होदी । (हला! मुहूर्तं अत्रोपविश्य विश्राम्यतु भवती) ।

पद्मि—मह कहं विस्समो तं पिअजणं अपेक्खन्तीए । (मम कथं विश्रमः तं प्रियजनमप्रेक्षमाणायाः ) ।

भ्रम—देवीपसादादो अविळम्बेण पिअं देक्खसि । (देवीप्रसादादविलम्बेन प्रियं द्रक्ष्यसि)

पद्मि—एत्तिअं काळं पूआपरत्तणेण विरहतावो ओसरिओ । दाणिं अदिरमणिज्जं एदं घरं पेक्खंतीए मह अहिओ होइ । (एतावन्तं कालं पूजापरत्वेन विरहतापोऽपसृतः । इदानीमतिरमणीयमेतद्गृहं प्रेक्षमाणाया अधिको भवति)

भ्रम—मा चिन्तेहि । (मा चिन्तय)

पद्मि—कहं चिन्ताविरामो मह! पावो जीमूओ पाणिं गहिस्सदि । (कथं चिन्ताविरामो मम । पापो जीमूतः पाणिं ग्रहीष्यति) (इति अश्रूणि मुञ्चति)

भास्क— यावन्तमानन्दमियं विधत्ते प्रेमातिरेकं मयि संवहन्ती ।
शताधिकं तं वितनोति तस्मादन्यत्र कृत्वा पुरुषे विरक्तिम् ॥

भ्रम—हळा! समस्ससिहि । अत्थि सारआणन्दो । (समाश्वसिहि । अस्ति शारदानन्दः)

पद्मि—सोवि एत्थ दाणिं ण वट्टइ । (सोऽप्यत्रेदानीं न वर्तते)

भ्रम—जदो कुदोवि समए आअमिस्सइ । (यतः कुतोऽपि समये आगमिष्यति)

पद्मि—हळा! जामिणीवि संकुइदा। (यामिन्यपि सङ्कुचिता) (इति मूर्च्छति)

भ्रम—(वीजयित्वा) कुदो ण उच्छसिइ। (कुतो नोच्छ्वसिति!। हा विहे! पदुमिणिं विणासिअ भमरिआजीविअं ओहरिदुं पउत्तोसि। (हा विधे! पद्मिनीं विनाश्य भ्रमरिकाजीवितमपहर्तुं प्रवृत्तोऽसि। (इति सिञ्चति शीतवारिणा) (निरूप्य) हा! ण उम्मीळेइ लोअणम्। (हा! नोन्मीलयति लोचनम्)।

भास्क—अयमेवावसरो ममाविर्भवितुं, यतः प्रभातप्राया विभावरी। तथाहि

विशति तुहिनरश्मिर्मध्यभागात्प्रतीचीं
दिशमधिकमुपेतो दृश्यते पूर्णबिम्बः।
मुहुरयमनुकूजत्युत्थितस्ताम्रचूडो
मुखरयति दिशः श्रीकान्तनाम द्विजानाम्॥

कोकाङ्गनाविरहतापनिवृत्तिकालो
मौनव्रतक्षतिकरः करटावलीनाम्।
नेत्रव्रजे तिमिरकृत्खलु कौशिकानां
कालो विकासिकविधीः समुपस्थितोऽद्य॥

यद्यधुनाऽऽविर्भूय नोच्छ्वासयामि पद्मिनीं मीलितैव स्यात्। (इति प्रकटीभवन्) अहो प्रमादः! कुतो नोच्छ्वसिति पद्मिनी?

भ्रम—अज्ज सअळळोअखेमंकरेण तुह करेण परिमसदु भवं पदुमिणिम्। (आर्य! सकललोकक्षेमङ्करेण तव करेण परिमृशतु भवान् पद्मिनीम्)।

भास्क—(करेण पद्मिनीं परिमृश्य स्पर्शसुखमभिनीय) (स्वगतम्)।

सुदती किमु वृन्तमोचितैर्नवमल्लीदलसञ्चयैः कृता।
उत बालसुधाकरप्रभारचिता सृष्टिकृतेक्षुधन्वना॥

पद्मि—(उच्छ्वसिति)

भास्क—(तिरोधत्ते स्तम्भे)

भ्रम—दिट्ठिए उज्जीविआ पिअसही। (दिष्ट्या उज्जीविता प्रियसखी)

पद्मि—हळा! किं सुहाधारासित्तं मह गत्तम्? (किं सुधाधारासिक्तं मम गात्रम्)

भ्रम—हळा! तुह वक्कळइकरपरिसादो अंगं किं सुहासेअणं विअ। (तव वल्कभन्तर...न्दर्थकं सुधासेचनमिव।

भास्क—(स्वगतम्)

रोमोद्गमः समजनिष्ट मम प्रियायाः
संस्पर्शसम्भवसुखातिशयेन योऽङ्गे।
तेनापि कञ्चुकितसर्वशरीरकं मां
कृन्तत्यतीव मदनस्य कथं पृषत्कः॥

पद्मि—हळा! किं असुळहं भाअहेअं संभावेसि। (किमसुलभं भागधेयं सम्भावयसि)

भ्रम—हळा! सुळहं एव्व सम्भावेमि। जदो सो तुमस्सिं, तुमं तस्सिंवि समाणुराआ। (सुलभमेव सम्भावयामि। यतस्स त्वयि त्वं तस्मिन्नपि समानुरागौ)

पद्मि—(सौत्सुक्यम्) हळा! तस्स ममस्सिं अणुराओ मह वअ अहिओत्ति कुदो जाणीअदि। (तस्य मयि अनुरागो ममेवाधिक इति कुतो ज्ञायते।

भ्रम—तुहिणमण्डळं जेदूण जअलच्छीसमाळिंगिदोवि सो तुमं तहा पेक्खिअवन्तो। (तुहिनमण्डलं जित्वा जयलक्ष्मीसमालिङ्गितोऽपि स त्वां तथा प्रेक्षितवान्)

भास्क—सत्यमेतत्!

तस्याः कटाक्षकलिन्दकन्यास्रोतो मुखं मे विशति स्म यावत्।
तावन्मदीयेक्षणमत्स्ययुग्मं वेगोत्प्लुतं तद्वदनं व्यगाह॥

पद्मि—तं पुणोवि दट्ठूण एक्कवारं वा किं सुहं अणुहविस्सम्?। (तं पुनरपि दृष्ट्वा एकवारं वा किं सुखमनुभविष्यामि!)

भ्रम—सहि! सज्जो एव्व देवीपसादादो तारिसं सुहं अणुहविस्ससि। (सखि! सद्य एव देवीप्रसादात् तादृशं सुखमनुभविष्यसि)

पद्मि—कहं असम्भावणिज्जं संभावेसि? (कथमसम्भावनीयं सम्भावयसि)।

भ्रम—संभावणिज्जं एव्व। (सम्भावनीयमेव)।

भास्क—(स्वगतम्) हन्त कालो याप्यते वृथालापेन सख्या।

स्फुरति मम भुजोऽयं त्वत्समालिङ्गनाय
स्तनवसनपाते सम्भ्रमं याति जिह्वा।

[illegible]
वदनपरिमलाप्तौ घ्राणमावेगमेति ॥

**भ्रम**—हळा! माळईमाळं करे धारअन्ती पडिवाळेहि तस्स आअमणम्।
(मालतीमालां करे धारयन्ती प्रतिपालय तस्यागमनम्)

**पथि**—मं परिहससि!। (मां परिहससि)

**भ्रम**—णो परिहासो। सो आगमिअ तुह माळं गळे गहिस्सइ।
(नो परिहासः। स आगत्य तव मालां गले ग्रहीष्यति) (इति मालां ददाति)

**पथि**—(गृहीत्वा) हळा! पदारेसि माम्। (प्रतारयसि माम्)।

**भ्रम**—ण पदारेमि। माळं उद्धारेहि करेहिम्। (न प्रतारयामि। मालामुद्धारय कराभ्याम्)

**पथि**—(मालामुद्धृत्य) हळा! तुह एसो कोवि विणोओ। (तव एष कोऽपि विनोदः)

**भास्क**—हन्त! कामिजनस्य मनोरथप्राप्तौ सहचरजनवशंवदता।

**भ्रम**—ण विणोओ। माळं गअणे णिक्खिव। तस्स कण्ठे पडिस्सइ। (न विनोदः। मालां गगने निक्षिप। तस्य कण्ठे पतिष्यति)

**पथि**—(मालामुत्क्षिपन्ती) सहिवअणाविस्सासादो माळं णिक्खिवेमि णिराहारम्। को वा पुण्णजणो देवीमालाए भूमिपअणादोसादो मं रक्खिस्सदि कण्ठे गहोय।

(सखीवचनविश्वासान्मालां निक्षिपामि निराधारम्। को वा पुण्यजनः देवीमालायाः भूमिपतनदोषान्मां रक्षिष्यति कण्ठे गृहीत्वा। (इति विसृजति मालाम्)।

**भास्क**— एषोऽस्मि यद्गलतलाधिगमाय मालां
निक्षिप्तवत्यसि सखीवचनादरेण।
तां धर्तुमत्र तव दासजनात्किमस्मा-
दन्योऽस्ति भास्कर इति प्रथितान्मृगाक्षि ॥

(इति सत्वरं निर्गत्य कण्ठे गृह्णाति मालाम्)

**पथि**—(स्वगतम्) किं एदं अच्चरिअं? अहवा संकप्पकप्पिदो एसो? उद सिविणअं पेक्खेमि
(किमेतदाश्चर्यम्! अथवा सङ्कल्पकल्पित एषः? उत स्वप्नं प्रेक्षे?)

**भ्रम**—हळा! किं मह वअणं सच्चं आसि। (किं मम वचनं सत्यमासीत्?)

पद्मि—(सम्भ्रान्ता तिष्ठति)

भ्रम—इदो वरं अहं एत्थ ठिदा जदि तुम्हाणं अणहिमदा भविस्सम् ।
(इतः परं अहमत्र स्थिता यदि युवयोरनभिमता भविष्यामि) (इति मन्दमपसरति)

पद्मि—हळा! किं गच्छेसि मं एआइणिं विसज्जिअ । (किं गच्छसि मामेकाकिनीं विसृज्य)

भ्रम—पिअसहाआ खु होदी । मए किंकादव्वम् ? अत्थि भअवतीए समप्पिअं सव्वं पुप्फादिअं वत्थुजाअम् । (प्रियसहाया खलु भवती, मया किं कर्तव्यम् । अस्ति भगवत्यै समर्पितं सर्वं पुष्पादिकं वस्तुजातम्) । (इति निष्क्रान्ता)

भास्क—(कण्ठादवमुच्य मालां पद्मिनीग्रीवायामर्पयति) ।

पद्मि—जणकवसो हि एसो जणो । (जनकवशो ह्येष जनः)

भास्क—प्रिये ! तदीयाशयोऽस्मदनुकूल इति विदितमेव । (इति पाणिं गृह्णाति)

पद्मि—(धून्वतीव) जीमूतस्स मं विदरिदुं पवट्टइ खु सो । (जीमूताय मां वितरितुं प्रवर्तते खलु सः) ।

भास्क—तत्र भवान् शारदानन्दः स्वोपायेन जीमूतं प्रतारयिष्यतीति प्रत्ययेन ।
(इति वसनाञ्चलं गृह्णाति)

पद्मि—(मोचयन्तीव)

भास्क—भद्रे! तव वदनकमले कोऽयं केतकीपरागः? (इति सफूत्कारं चुम्बितुं प्रवर्तते) ।

पद्मि—(मुखं परावर्तयति) ।

भास्क—प्रेयसि ! सन्ध्याकालात् पूर्वमेव प्रतीचीसङ्गरतूर्णे कार्ये इत्येव चन्द्रः आवेगेन स्रंसमानांशुको[1] द्राक् धावति । आवां नो विलम्बं विदध्वः ।

देव्यै समर्पिततया रुचिरं निकामं
भुक्त्वाऽद्य भ[illegible]श्च निपीय पेयम् ।
माल्यानुलेपनधरा[illegible]पयाज्य वीटी-
मन्योन्यमत्र मुदितौ शयनं भजावः ॥

(इति निष्क्रान्तौ)

॥ इति पद्मिनीपरिणये गान्धर्वविवाहो नाम चतुर्थोऽङ्कः ॥

1. स्रंसमानांशुकः, विगलत्किरणः; [illegible]ः ।

## ॥ अथ पञ्चमोऽङ्कः ॥

(ततः प्रविशति अरुणः)

अरुणः— फलिता मधुमताश्रयवर्धिता मम प्रज्ञावल्लरी ।

पद्मिन्युद्वीयसि मम वपुः खिन्नतां पूर्वमार्च्छ-
द्वेतीजन्मप्रसवशरसन्तप्यमानाखिलाङ्गे ।
सख्यौ तस्मिन् शुभविधिविधौ पद्मिनीयागभाजि
प्रोत्से सम्प्रत्यहह सविधं स्नातका विशामि ॥

(पुरो वीक्ष्य) आगच्छति मधुमता, एषा प्रष्टव्या समनन्तरवृत्तान्तम् ।

(प्रविश्य)

मधु— अय्य ! सफलं आसि तुह मह अ किच्चम्? (आर्य ! सफलमासीत् तव मम च कृत्यम्)

अरु— भद्रे ! कीदृशी जीमूतप्रवृत्तिः ।

मधु— आअदो हदओ वाउळीकुणइ कासारम् । (आगतो हतको व्याकुलीकरोति कासारम्)

अरु— कासारः प्रयतते वा पद्मिनीं जीमूताय प्रदातुम् ।

मधु— किं करिस्सदि महप्पा । वाउळेण हिअएण विवाहकज्जे पवट्टन्तो विअ णिस्ससिइ पुणो पुणो । (किं करिष्यति महात्मा । व्याकुलेन हृदयेन विवाहकार्ये प्रवर्तमान इव निःश्वसिति पुनः पुनः)

अरु— पद्मिनी किमाचरति ?

मधु— हा देवि ळच्छि, मंगळदेवए, मं दइदेण मेळाअंती किं रक्खिस्ससि ? उद जीमूअकरे णिक्खिविअ मारइस्ससित्ति पळवंती अळंकिदापि मिळाणमुही कादव्वं अमुणंती वट्टइ । (हा देवि लक्ष्मि! मङ्गलदेवते! मां दयितेन मेलयन्ती किं रक्षिष्यसि ? उत जीमूतकरे निक्षिप्य मारयिष्यसीति प्रलपन्ती अलङ्कृताऽपि म्लानमुखी कर्तव्यमजानती वर्तते ।

अरु— जीमूतः कीदृशः ?

मधु— आसण्णे समए विवाहसरिसाळंकारसोहिओ
हत्थे धारिअकोदुओ सहरिसं जो वट्टएइ... ॥

संभारेइ णवव्वहूमणिकिदे चेळं मणीभूसणं
पुप्फं साहु हिमम्बुचंदणरसं कत्थूरिअं णूअणम् ॥

[आसन्ने समये विवाहसदृशालङ्कारशोभां गतो
हस्ते धारितकौतुकस्सहर्षं स भद्रवेदीस्थितः ।
संभारयति नववधूमणिकृते चेलं मणीभूषणं
पुष्पं साधु हिमाम्बुचन्दनरसं कस्तूरिकां नूतनाम् ॥ ]

अरु— मा चिन्तय । भगवानस्ति शारदानन्दः पद्मिनीं भास्करेण योजयितुं समुत्सारयितुं जीमूतञ्च कृतसङ्कल्पः ।

मधु — सो वि एत्थ ण दीसइ । (सोऽप्यत्र न दृश्यते)

अरु— आगमिष्यति समये । आवां प्रयावः समीपं सुहृदोः । (इति निष्क्रान्तौ)

॥ मिश्रविष्कम्भः ॥

(ततः प्रविशति कासारो विदूषकश्च)

कासा— सखे ! सम्प्रत्यहं इतिकर्तव्यतामूढोऽस्मि ।

विदू— वअस्स ! मा चिंतेहि. मळीमसं तं जीमूदं उस्सारेमि दंडं उक्खिविअ । (वयस्य ! मा चिन्तय । मलीमसं तं जीमूतं उत्सारयामि दण्डमुत्क्षिप्य) ।

कासा— (विहस्य) सखे ! दण्डनिक्षेपेण कथं जीमूतोत्सारणम् ।

विदू— किं उण से उस्सारणकारि ? (किं पुनरस्योत्सारणकारि ?)

कासा— शारदानन्दागमनमेव ।

विदू— जदि, सो सुमरणिज्जो होदा । (यदि, स स्मरणीयो भवता ।

कासा— स्वामिन् !

सन्मार्गस्थद्विजाधीशमित्रमण्डलशोभनम् ।
कुर्वन्तं शारदानन्द भवन्तं संस्मराम्यहम् ॥

( प्रविश्य )

शार— मा स्म चिन्तयः । अयमहमागतः ।

1. सन्मार्गः = साधुपथः, आकाशश्च । द्विजाधीशः = विप्रः, चन्द्रश्च । मित्रं = बन्धुः । मित्रः = सूर्यश्च ।

**कासा**—(प्रणम्य) सखे! समुपाहर विष्टरम्।

**विदू**—(विष्टरमुपहरति)

**शार**—(उपविश्य) राजन्! अपि कुशलम्?

**कासा**—कुशली भवामि, यतो भवन्तं पश्यामि।

**शार**—कीदृशी प्रवृत्तिरिहत्या।

**कासा**— प्रायो निरस्तकीलालभावेन धवलाकृतिः।
पद्मिनीप्रेप्सया हन्त जीमूत इह बाधते॥

**शार**—उपायेन जेतव्यः स पापः।

**विदू**—अय्य! आअच्छइ पुरोवाओ। (आर्य! आगच्छति पुरोवातः)।

**कासा**—(अपवार्य) अहह! पुरोवाते पुरो भवति चलतीव ममान्तरम्।

(प्रविश्य)

**पुरो**—राजन्! कुतोऽयं विलम्बः पद्मिन्या जीमूतस्य घटने?।

**शार**—न सम्भ्रमः कार्यः। समये नातिक्रमणीयः कर्तव्यताक्रमः।

**पुरो**—उपदिश्यतां भवता सर्वमुपदेष्टव्यम्।

**शार**— अभ्यक्ता सुभगा कवोष्णसलिलस्नाता दुकूलं शुभं
धत्तां भूषितमूर्तिरस्तु महितैः सर्वैर्मणीभूषणैः।
आलीभिः फलपुष्परत्नविलसत्पाणिद्वयाभिः सती
गत्वा सागरनन्दिनीगृहमियं क्षेमाय तां वन्दताम्॥

**पुरो**—इदं निवेदयामि स्वामिने। (इति निष्क्रान्तः)

**शार**—भद्रे! भेरीमृदङ्गपणवानकमङ्गलादि-
वादित्रबृन्दनिनदैः परिपूर्यतां द्यौः।
मन्दं चरन्तु गणिकाश्चरणप्रवल्ग-
न्मञ्जीरनादविवशीकृतषिद्गचित्ताः॥

1. कीलालम्—रक्तम्; जलञ्च।

किञ्च, तरवारिकरा वीरा धीराः कञ्चुकिनोऽधुना ।
रुन्धन्तु मन्दिरद्वारे इन्दिराया जनं द्रुतम् ॥

**कासा**—सखे ! तथा आदिश्यताम् ।

**विदू**—तह (तथा) (इति निष्क्रान्तः)

**शार**—भद्र ! वत्सो भवतः कुमुदाकरः सह वयस्येन मिलिन्देन समायातु ।

**कासा**—कोऽत्रभोः । (प्रविश्य कञ्चुकी) एषोऽस्मि ।

**कासा**—आहूयतां वत्सः सहवयस्यः ।

**कञ्चु**—तथा (इति निष्क्रान्तः) । (प्रविश्य विदूषकः) किदो णिदेसो । (कृतो निदेशः)

**कासा**—कथं सखे ?

**विदू**—गोवणिज्जं गूहिदुं जाणेमि अहम् । मुणइ मह घरिणी अ ।
(गोपनीयं गूहितुं जानाम्यहम् । जानाति मम गृहिणी च ) ।

**कासा**—सखे ! यत्किञ्चिद्रहस्यं कथितं तव गृहिण्यां अवश्यं कथयिष्यसीति मन्ये ।

**विदू**—को संसओ । ताए ण कहिदं जदि णिद्दा मज्झ ण आअमिस्सइ ।
(कस्संशयः । तस्या न कथितं यदि निद्रा मम नागमिष्यति । )

**शार**—(विहस्य) हन्त !

रहोवृत्ताम्बुपूरस्य गभीरान्मनसो नृणाम् ।
बहिर्निस्सृतये जज्ञे प्रणाली प्रमदाश्रुतिः ॥


SRI VENKATESWARA CENTRAL LIBRARY & RESEARCH CENTRE
TIRUPATI.
25028

**कासा**—सखे ! किं श्रुतं भगवतो वचः ।

**विदू**—मम घरिणी ण प्पमआ । (मम गृहिणी न प्रमदा)

**कासा**—किं पुमान् भार्या तव !

**विदू**—रहस्सगोवणे परं पुरिसो एव्व मह घरिणी । (रहस्यगोपने परं पुरुष एव मम गृहिणी)

**शार**—राजन् ! विदूषकेण भार्यायामपि रहस्यमिदं गोपितं स्यात्तर्हि तिष्ठत्विह ।

**विदू**—तारिसपडिस्सुदंवि मोत्तूण एदं रहस्सं ण कहेमि ! (तादृशप्रतिश्रुतमपि मुक्त्वा एतद्रहस्यं न कथयामि !


T.T.D. LIBRARY ... TIRUMALA.
015, 2SB, 151
152J52

( प्रविश्य )

**कञ्चुकी**—आगतः कुमारः सवयस्यः । (प्रविशति समिलिन्दः कुमुदाकरः । गुरुं प्रणमति) ।

**शार**—भवान् सवयस्यो निगूढं प्रविश्य पद्मालयालयं वर्तताम् । अहमत्रागत्य कर्तव्यमुपदेक्ष्यामि ।

**कुमु**—तथा (इति निष्क्रान्तः) ।

(नेपथ्ये वाद्यध्वनिः)

**कासा**—स्वामिन् ! प्रतिष्ठते वत्सा समुद्रतनयां वन्दितुमिति मन्ये ।

**शार**—आवामपि यावः । (इति परिक्रामतः) राजन् ! भद्रायां भगवतीवन्दनाय निर्यान्त्याम्,

इयं प्रतिगृहाग्रभूप्रविलसन्मणीतोरणा
शिरोभवनजालकोन्मिलितसुन्दरीलोचना ।
जवग्रहतदुन्दुभिध्वनिसमुच्चलद्बर्हिणा
झलज्झलितनूपुरोल्लसितवारयोषा पुरी ॥

**कासा**—आर्य ! वत्सा प्रविष्टा पङ्कजवासिनीभवनान्तःस्थलीम् । प्रविशावस्तावत् ।

**शार**—(कासारेण प्रवेशं नाटयति) (प्रविशति पद्मिनी भ्रमरिकया मिलिन्देन कुमुदाकरश्च) (पद्मिनी गुरुं प्रणमति)

**शार**—वत्से ! कुतो ग्लानवदनाऽसि ?

**पद्मि**—भअवं ! मह वअणस्स गळाणिकाळणं भवं किं ण वेत्ति ?
(भगवन् ! मम वदनस्य ग्लानिकारणं भवान् किं न वेत्ति ? )

**शार**—वेद्मि । भद्रे ! भगवतीं मधुसूदनप्रणयिनीं उपासीनायाः तव का वा विपत्तिः न नश्यति ? का वा सम्पत्तिः न सम्पद्येत ?

**पद्मि**—स्वामिन् ! तत्तवेइणो तुह अणुग्गहो एव्व अइलसेअसं णिआणम् ।
(स्वामिन् ! तत्त्ववेदिनस्तव अनुग्रह एव अखिलश्रेयसां निदानम् )

**शार**—वत्स मिलिन्द ! कुमुदाकर ! भवतोः प्रज्ञयैव वञ्चनीयो जीमूतः । ततो निखिलमनोरथस्य निरन्तरायमवाप्तये वन्दनीयाऽधिकं इन्दिराऽरविन्दमन्दिरा ।

**कुमु**—यथाऽऽज्ञापयत्यार्यः । (इत्युत्थाय देवीं प्रणम्य धृतमूर्धाञ्जलिः)

अम्ब रमे ! पालय मामम्बरवास्तव्यवन्दनीयपदे ।
शम्बररिपुजननि वशे तं परमं पूरुषञ्च कुर्वाणे ॥

पाहि सरोरुहसदने पार्विकशरदिन्दुसंस्फुरद्वदने ।
मुक्तामणिसमरदने मधुरिपुहृदये सदोदयन्मदने ॥

प्रणतजनदैन्यदावप्रशमनपटुदृष्टिवृष्टिपीयूषे ।
मातस्समुद्रतनये नेतः परमस्मि दीनतां सोढा ॥

शरणं भवतीं प्राप्तः करुणापाङ्गेन दुरितनाशकरीम् ।
पुनरपि यदि खिन्नोऽहं कमले मम लम्बनं किमस्ति परम् ॥

अवलम्बे तव चरणाववलङ्कापुरपतिद्विषो महिषि ।
नवनवसुखं ददाने नवनपराणां नृणां जगज्जननि ॥

नाथे दिनकरवंशे जाते जाते समुद्ररशनायाः ।
रक्षोलतासिधेनो रक्षाम्ब स्वीयभक्तसुरधेनो ॥

यदुकुलनाथीभूते ! दनुभवशत्रौ विदर्भराजस्य ।
अन्वयमतीव धन्यं तन्वति मातर्निधेहि कारुण्यम् ॥

श्रीस्त्वं यतोऽम्ब भवतीं श्रीमान् लब्ध्वा हरिस्ततो जयति ।
देवि त्वयैव कीर्त्या नाथो जगतां स कीर्तिमान् प्रथते ॥

यं जननि वीक्षितुं त्वं जनमिह दयया प्रवर्तसे देवि ।
स भवति भाजनमवनौ स्तुतेः कवीनां कुलीनतादिगुणैः ॥

शार—वत्स ! भवन्तं भक्तजनवत्सला भगवती द्रागवतीति निश्चिनोमि । तदिहागत्य क्रियतां करणीयम् ।

कुसु—उपदेष्टव्यमाचरणीयम् ।

शार— ऋजवोऽत्र विजेतव्या ऋजुमार्गेण धीमता ।
कुटिलाः कुटिलेनैव पथा द्राक् क्षेमकाङ्क्षिणा ॥

पुरा मुरारिः पुरुषः पुराणः सुरारिवर्गं खलु विप्रलब्धुम् ।
आदाय योषामणिवेषमीशः प्रादादशेषां वसुधां सुरेभ्यः ॥

विदू—मुणिअम् । कुमाळेण इथिआरूवं धरणिज्जम् ; वंचणिज्जो जीमूओत्ति ।
(ज्ञातम् ! कुमारेण स्त्रीरूपं धरणीयम् ! वञ्चनीयो जीमूत इति ) ।

कासा—सखे! किं कथितं कुमारेण स्त्रीरूपं धार्यमिति गुरुणा?

विदू—वअस्स! केण उण धरणिज्जम्! (वयस्य, केन पुनर्धरणीयम्!)

कासा—भवतैवास्तु।

विदू—जदि मह घरिणी पुरुसरूवं धारेदुं संमण्णइ अहं इत्थिआरूपं धरिस्सम्।
(यदि मम गृहिणी पुरुषरूपं धारयितुं सम्मन्यते, अहं स्त्रीरूपं धारयिष्यामि)

(सर्वे हसन्ति) (प्रविश्य)

कञ्चु—जीमूतप्रेषितानि भूषणानि वहन् कोऽपि प्रतिहारभूमिं गतः।

कासा—(शारदानन्दमुखं पश्यति)

शार—तान्यादाय स विसृज्यताम्।

कञ्चु—तथा (इति निष्क्रम्य, पुनः प्रविश्य) तानीमानि। (इति निधाय निष्क्रान्तः)

शार—वत्स! विमुच्य धार्यमाणं पुरुषानुरूपं भूषणं भवता ध्रियतामिदं वधूभूषणतया प्रेषितं जीमूतेन। भ्रमरिकालङ्कारमखिलमादायालङ्क्रियतां मिलिन्दः।

कुमु—(किमपि नम्रमुखस्तिष्ठति)।

शार—वत्स! किं चिन्तयसि?

कासा—आर्य! न जानासि किमस्याशयम्।

शार—जानद्भिरेवास्माभिः कौमुद्यै कुमुदाकरप्रतिच्छन्दप्रदर्शनपूर्वकं पद्मिनीरूपायाः प्रतिमायाः समाराधनरूपं किमपि व्रतमुपदिष्टम्।

कासा—आर्य! तदाराधनीयायाः प्रतिमायाः पद्मिनीरूपताहेतुः नावगम्यते।

शार—अवगम्येत क्रमेण।

कासा—(स्वगतम्) दुर्ज्ञेयमस्य हृदयम्। (प्रकाशम्) वत्स!

उचितेऽनुचिते वाऽपि महतां वचनादरात्।
प्रविशन् पुरुषः क्वापि न स्खलेदिष्टलाभतः॥

विदू—मिलिन्द! तुमं पुढमं ओदारेहि आहरणाइ धारिआइम्।
(मिलिन्द! त्वं प्रथममवतारयाभरणानि धारितानि। (इति मिलिन्दाङ्गाद्भूषणं विमोचयति)

भ्रम—अज्ज! सअं एव्व अहं भूसणं ओदारेमि! (आर्य! स्वयमेवाहं भूषणमवतारयामि)

**विदू**—(भ्रमरिकाभरणमादाय मिलिन्देन सह निष्क्रान्तः)। (कुमुदाकरः अङ्गात्स्वभूषणमवतार्य समादाय च जीमूतप्रहितमाभरणं निष्क्रान्तः)।

**भ्रम**—(कुमुदाकरमिलिन्दयोर्भूषणमादाय) हला! जामो। (हला! यामः) (इति पद्मिनीं पाणौ गृहीत्वा निष्क्रान्ता) (प्रविश्य)

**कञ्चु**—सामात्यो जीमूतः प्रतिहारभूमिं गतः।

**शार**—प्रवेश्यतां शीघ्रम्।

**कञ्चु**—तथा (इति निष्क्रम्य-पुनः प्रविशति सामात्येन जीमूतेन सह)

**जीमू**—भोः! पुरोवात! विवाहवेलायां वन्दनीया खलु मयाऽप्यरविन्दाक्षसुन्दरी।

**पुरो**—अथकिम्।

**कासा**—(उत्थाय) आर्य! जीमूत! आसनमिदं समलङ्क्रियताम्।

**विदू**—विमळं एदं जदि अय्येण जीमूअमहाराएण आरूडं भवे समळं किदम्।
(विमलमेतत् यदि आर्येण जीमूतमहाराजेन आरूढं भवेत्समलं कृतम्)।

**जीमू**—(उपविश्य) आर्य! शारदानन्द! भवत्सन्निधिमहिम्ना भवाम्यहं विमलीभूतात्मा।

**विदू**--(अपवार्य) वअस्स! सारआणन्दसंणिहाणे इमस्स कह पदुमिणीळाहो भवे।
(वयस्य! शारदानन्दसन्निधाने अस्य कथं पद्मिनीलाभो भवेत्)।

**शार**—आर्य! वन्दस्व मातरं जगतां निर्विघातं पद्मिनीमनोरथस्य सिद्धये।

**जीमूतः**—तथा। (इति वन्दते देवीम्)

**विदू**—(अपवार्य) वअस्स! पदुमिणीए मणोरहसिद्धए वंदइ देविं जीमूओ।
(वयस्य! पद्मिन्या मनोरथसिद्धयै वन्दते देवीं जीमूतः)।

**कासा**—(अपवार्य) रक्षतु लक्ष्मीः वत्साम्।

**शार**—भद्रा कुतो विलम्बते नूत्नाभरणधारणाय गता।

**विदू**—अण्णारिसी खु भद्दाए दाणिं पसाहणरीई।
(अन्यादृशी खलु भद्रायाः इदानीं प्रसाधनरीतिः)

(प्रविशति पद्मिनीवेषधारी कुमुदाकरः भ्रमरिकाकृतिधारिणा मिलिन्देन सह। कुमुदाकरवेषधारिणी पद्मिनी च मिलिन्दाकृतिधारिण्या भ्रमरिकया सह)।

विदू—सरिसं एदाणं पसाहणं अपुव्वं सोहं उप्पादेइ। (सदृशमेतयोः प्रसाधनमपूर्वां शोभामुत्पादयति)

शार—सर्वं भवादृशानां प्रसादात्।

विदू—णो अह्मारिसाणं पसादादो ईरिसं खेमं होइ। अविदु तुह्मारिसाणं एव्व। (नो अस्मादृशानां प्रसादादीदृशं क्षेमं भवति। अपितु युष्मादृशानामेव)

जीमू—(कुमुदाकरं वीक्ष्य सकुतुकं) (स्वगतम्)

अरुणा रदनाम्बरे मृगाक्षी धवलाभा हसिते सितेतराऽक्षिणि।
अकलङ्कसुवर्णवर्णगात्री लिखितेवात्मभुवा विभाति चित्ते॥

(पद्मिनीं दृष्ट्वा, स्वगतम्)

स्यालं कोमलवपुषं सालङ्कारं निरीक्षमाणं माम्।
आलिङ्गनप्रवृत्तं रुणद्धि पौंस्नं तदीयरूपमिह॥

शार—आर्य! जीमूत!

त्वद्दारभावं सम्प्राप्य कासारापत्यमीदृशम्।
विचिन्तयाऽविनाशं त्वां प्रापयिष्यत्यसंशयम्॥

कासा— अपत्येन ममानेन भजन्नुपयमं भवान्।
भुवनेऽस्मिन्नवाप्नोतु भूतानां सर्वनिष्कृतिम्॥

शार—भद्र! भर्तुः आयुष्मत्त्वादिगुणवृद्धये विवाहप्रभृति समाचरणीयं व्रतमस्मै तव कलत्राय मयोपदिष्टम्। तन्मासत्रयेण समाप्येत। तावदवधि व्रतभङ्गहेतुर्भवता न किमपि कार्यम्।

जीमू—यथाऽऽज्ञापयति गुरुः।

विदू—तदो भवं जहा ण रमिस्सइ जुवदीहिं पुव्वाहिं तह करिस्सदि महाराअस्स अवच्चम्। (ततो भवान् यथा न रंस्यते युवतिभिः पूर्वाभिः तथा करिष्यति महाराजस्यापत्यम्)

कासा—आर्य! चिरात्पद्मिनीमवस्कन्दितुं कामयते मत्तेभकः। ततो भवता भवितव्यं समवहितेन तद्रक्षणे।

जीमू—कः शक्नोति मदधीनामेनामवस्कन्दितुम्?

विदू—अय्य ! सारआणंद! पदुमिर्णि, वुदाअरणकाळे पुरिसो परिसइ जदि मोहेण, किंअत्थि खदी ? (आर्य ! शारदानन्द ! पद्मिनीं व्रताचरणकाले पुरुषः स्पृशति यदि मोहेन, किमस्ति क्षतिः ?

शार—तत्क्षणं स भस्मीभवेत् ।

विदू—अहो वुदमहिमा । (अहो व्रतमहिमा)

कासा—आर्य ! जीमूत ! नितरां नियतेन भवितव्यं भवता ।

जीमू—अवहितोऽस्मि ।

कासा—　　यस्समाचरितो यस्य निर्विघ्नं श्रेयसे भवेत् ।
　　नियमो विहतः सोऽयं तस्य हन्त विपत्तये ॥

शार—तादृशो मन्त्रप्रभावः ।

पुरो—(स्वगतम्) कथं कामुकानां युवतिषु स्वस्य दोषोत्पत्तिविचारः ।

रघुपरिबृढपत्नीं स्वेन धर्मेण साध्वीं
　पटुमपथनिविष्टं दग्धुमुच्चैर्विदित्वा ।
अपि दशवदनो हा कामयामास जानन्
　द्रुपदतनुभुवं तां कीचको वीरभार्याम् ॥

(प्रकाशं) भगवन् ! यदवशिष्टं तदप्युपदेष्टव्यम् ।

शार—किमधिकेन । स्वप्राणरक्षणे सर्वथा भवितव्यं नियतेन ।

कासा—　　मया प्रदीयते तुभ्यमिदं मे कुलभूषणम् ।
　　स्त्रैणरूपं परं धत्ते कृत्येषु पुरुषो महान् ॥

विदू—तहा ताए सही भमरिआ वि । (तथा तस्याः सखी भ्रमरिकाऽपि)

शार—भोः कासार ! भवदीयमपत्यं सख्या विना क्षणमपि न वर्तेत खलु । ततो यातु तदनुगतमेव ।

कासा—कः संशयः ?

मिलिन्दः—कहं एदं विणा खणं वि जीविस्सम् । (कथमेतां विना क्षणमपि जीविष्यामि)

पद्मि—यथार्थमेतत् ।

**कासा**—भगवन् ! मम पद्मिनीव कुमुदाकरः, कुमुदाकर इव पद्मिनी प्रेमभाजनम् ।

**शार**—जानामि खलु !

**विदू**—वअस्स ! मा चिंतेहि । तुह सुओ पदुमिणीए करणिज्जं कज्जं वि णिव्वहइ ।
(वयस्य ! मा चिन्तय । तव सुतः पद्मिन्या करणीयं कार्यमपि निर्वहति ) ।

(नेपथ्ये)

**निर्णीतः शोभनोऽस्माभिर्मुहूर्त्तस्समुपस्थितः ।**
**क्व वधूः क्व वरो दाता क्व वृद्धः क्व पुरोहितः ?॥**

**कासा**—मौहूर्तिकाः शुभं समयं सूचयन्ति । तदविलम्बेन गच्छामो विवाहशालाम् ।

**शार**—उपपन्नम् । शोभनेऽस्मिन् समये किञ्चित् वत्सान्तिके वक्तव्यमुच्यते । (इति (कुमुदाकरस्य कर्णे किमपि वदति) ।

**कुमु**—भअवं ! साहु तुए उपदिट्टम् अवगअम् । तहा आचरिस्सम् ।
(भगवन् ! साधु त्वया उपदिष्टमवगतम् । तथा आचरिष्यामि ) ।

( इति निष्क्रान्तास्सर्वे )

॥ इति पञ्चमोऽङ्कः ॥

## ॥ अथ षष्ठोऽङ्कः ॥

(ततः प्रविशति भास्करोऽरुणश्च)

**भास्करः**—सखे! कीदृशो विवाहवृत्तान्तः?

**अरुणः**—वयस्य, किं कथयामि मन्दभाग्यः।

> मद्यः स्वेन वितीर्णभूषणगणालङ्कारिताङ्गीं वधूं
> जीमूतः कमलालयं प्रति गतः शीघ्रं समानीयताम्।
> कासारेण विवाहमण्डपसदोमध्यस्थितेनादरात्
> सन्दत्तां प्रतिगृह्य तुष्टहृदयः प्राप्तेप्सितार्थोऽभवत्॥

**भा**—सखे! किं निर्वर्तितपरिणयाऽऽसीत् पद्मिनी?

**अरु**—न केवलं निर्वर्तितपरिणया। परन्तु भर्तास्मदनुगता सामासीच्च।

**भा**—हा प्रेयसि! क प्रयातासि। (इति मूर्च्छति)।

**अरु**—सखे! समाश्वसिहि (इति पटान्तेन वीजयति)।

**भा**—(नेत्रे उन्मील्य) सखे! किं सत्यं पद्मिन्या जीमूतवशङ्गतत्वम्?

**अरु**—(स्वगतम्) हा कष्टम्।

> भूयोऽपि जीमूतवशं गतेति श्रुत्वा वचो मे स्वयमेव मूर्च्छेत्।
> असत्यमेषाऽन्यवशा न चेति ब्रवीमि वाक्यं किमहं विगर्ह्यम्॥

(प्रकाशम्) सखे! किं परकलत्रविषयविचारेण।

**भास्क**—अपि सत्यं जीमूतवशं गता पद्मिनी?

**अरु**—कथमसत्यं ब्रवीमि।

**भा**—
> कुशिकसुत इव स्याच्छारदानन्द एष
> क्षितिदुहितुरिव श्रीरामभद्रेण योगे।
> घटन इह मया द्राक् साधु कासारपुत्र्या
> इति मम हृदि कल्पितिर्व्यर्थतां प्रापदेवम्॥

हा विधे! मम दयमान इव पूर्वस्यां रजन्यां योजयन् वल्लभां मया सद्यो विघात्य परां शुचं प्रापयसि माम्। (कण्ठान्मालिकामवमुच्य दर्शयन्) सखे!

२३५९/८

एषा तदीयकरमारसयुग्ममुक्ता कण्ठे मया सकुतुकं सहसा गृहीता ।
माला मनोहरतमा समनन्दयन्मामेतावदन्तमधुना हृदयं दुनोति ॥

(इति मालां भूमौ निक्षिप्य, भूयोऽप्यादाय) अथ मालिके ! । मन्दभागाऽसि । यतः

तस्याः करौ किसलयप्रतिमौ विहाय
मां प्राप्तवत्यसि पुनः कृशपुण्यमत्र ।
एतां भवान् कथमपीह सखे नयंस्तां
पुण्यं भजेत यदियं बत खिद्यतीव ॥

अरु—सखे ! कुतस्त्वमेवमधीरोऽसि ?

भा—कुतो मे धीरता । पुरा मुरारिमहिलासमाराधनसमये

सा स्वस्तिकासनमवाप्य कराब्जतर्ज-
न्यङ्गुष्ठलग्नकुसुमा दरमीलिताक्षी ।
उत्तानिताकृतिलता चलिताधरेय-
त्तत्तादृशी मम पुरः किल वर्ततेऽद्य ॥

सखे ! नूनं प्रिया मम सरोरुहलोचना सा
जीमूतनीचवशमेत्य पुनर्न जीवेत् ।
स्मृत्वैव मामियमसून् क्षणतो विमुञ्चेत्
तां संस्मरन्नहमपि प्रजहामि जीवम् ॥

(इति पतति) ।

अरु—(उत्थाप्य) अलमावेगेन ।

भा— यस्याः कटाक्षलहरीव मधुव्रतालिः
यस्याः कचावलिरिवाभिनवाम्बुनीली ।
यस्या इवाननमहर्मुखबुद्धमब्जं
द्रक्ष्यामि तां पुनरहं क्व सखे ! सखेलाम् ॥

अरु—वयस्य !

भवादृशाश्च स्वप्रेमभाजनं जनमात्मना ।
[illegible]त्य मुक्तधैर्याश्चेत्किं पुनः प्राकृता भुवि ॥

भास्क—सखे !

स्वप्रेमपात्रमिति यत्तदहं विसोढुं शक्नोमि सारसदृशीतरहस्तभाजि ।
साऽशोचदन्यवशगा यदि सद्य एव प्राणांस्त्यजेयमिति यत्तदसह्यमास्ते ॥

सखे ! कुतो भवति दृष्टं शुभनिमित्तमपि विफलम् ?

स्पृशति मयि गात्रयष्टिं तस्याः प्रथमं करेण कुतुकेन ।
न्यपतत्प्रदीप्तदीपादर्चिःपुष्पं क्षितौ शनैः सुशुभम् ॥

हन्त ! मातः ! मधुसूदनप्रणयिनि !

याऽनन्यभक्तिरखिलेश्वरि ! कामिताप्त्यै
कारुण्यमेव भवदीयमियेष भूयः ।
तां पद्मिनीं विमतहस्तवशे निपात्य
पश्यन्त्यसन्न् विजहतीं सहसे कथं त्वम् ॥

जननि—

यस्मिन्प्रसीदसि जने त्रियुगप्रिये ! त्वं
तस्यापदेति विलयं समुदेति सम्पत् ।
इत्यत्र कोऽपि विशयो न भवत्प्रसाद-
प्राप्तिः किमल्पतपसाऽत्र जनेन लभ्या ॥

अम्ब ! प्रसीद मयि किञ्चिदिदं मदीयं
विज्ञापनं शृणु निरुन्धि भवत्तनूजम् ।
यो मां निहन्ति विशिखैः करुणाविहीनो
रन्ध्रं प्रतीक्ष्य निशितैरपि पुष्परूपैः ॥

अरु— वयस्य ! समाश्वस्य मनो विनोदय क्रीडावनदर्शनेन ।

भास्क—सखे ! आराममाराणीयकं पश्यतो मम समेधते विरहानलः ।

तरुणतरुगणेषु द्योतमाना प्रसूना-
वलिरिह मदनस्य क्रूरबाणत्वमेत्य ।
हृदि मम निपतन्ती बाधते ज्यात्वमत्र-
भ्रमदलिततिरेवोपैति हा निर्घृणस्य ॥

अथवा । चम्पककुसुमावलोकनेन हृदयं विनोदयामि । यदस्मिन् मधुपसञ्चाराभावात् निर्गुणता भवति । गुणसङ्गं विना शरस्योदञ्चनं न सिद्ध्यति खलु ! । (इति चम्पकमुपसृत्य) सखे ! हन्त

बाणा न मकरकेतोश्चम्पककुसुमानि विरहिलोकस्य ।
हृदयप्रदाहकानि ज्वलितानि महान्त्यलातचक्राणि ॥

अथवा !

भोश्चम्पक सखे हिंसा न युक्ता मयि ते यतः ।
मत्प्रियानासिकौपम्यं दधासि परदुर्लभम् ॥

अरु— (स्वगतम्) हन्त सखा दशाननापहृतसीतावियुक्तस्य श्रीरामभद्रस्य दशां प्राप्तः । (प्रकाशम्) सखे ! कथं उन्मादावस्थां गतोऽसि ।

भास्क— कुसुमशर नमस्ते तिग्मबाणप्रयोगा-
द्विरम परभृत त्वां नौमि मौनं भजस्व ।
मलयपवन मां त्वं मा स्पृश स्याः सुपुण्यो
मयि कथमतिदीने नास्ति वोऽत्रानुकम्पा ॥

अरु—वयस्य ! विपन्निकष एव पुरुषाणां मनोधृतिर्हेम परीक्ष्यते ।

भास्क— [1]अत्यन्तभीषणतमःक्षितिभृत्क्षणेन
यत्तेजसि स्फुरति दूरमपैति कामम् ।
यस्याशनिप्रतिभयादपि भीर्न मेघात्
सोऽहं बिभेमि मदनस्य परं हि बाणात् ॥

इह हि !

सर्वं लोचनगोचरं भवति मे कल्पान्तकालोपमं
सर्वे सम्प्रति कर्णभागविषयाः संवर्त्तमेघारवाः ।
एवं तावदहो भवेन्न विरयो यावत्प्रियां नो दृशा
द्रक्ष्यामि श्रवणेन तन्मृदुगिरं श्रोष्यामि नाहं सखे ॥

1. भीषणतमः = अतिभीषणः । भीषणं तम एव क्षितिभृत् यस्य, मे = मम, अघात् = व्यसनात् मेघात् = घनाच्च ।

सखे ! कुतः प्रेयस्या दर्शनमितः परम् ?

मत्कृते हरिणीनेत्रा प्राणान्मुञ्चेन्न संशयः ।
तत्कृतेऽसून्न मोक्ष्यामि यदि स्यान्मे कृतघ्नता ॥

तत् प्रवर्धय जातवेदसम् ।

**अरु**—अलं सम्भ्रमेण ।

**भा**— यस्यां निवासमयते सततं द्दढं श्री-
[1]र्या लोकमङ्गलकरी भुवनत्रयस्य ।
तस्या विकासमिह काममकुर्वता मे
कोऽर्थो भवेदहह तेन महोदयेन ॥

**अरु**—सखे ! सर्वथा रक्षद्भिः प्राणान् चिरादाप्यते हि श्रेयः ।

**भा**—सखे ! मा रौत्सीर्मम मरणम् । मारो हि समारोपयति मुहुर्ज्यां धनुषि मम वेधनाय । (इति मूर्च्छति) ।

**अरु**—(स्वगतम्) सखा कथञ्चिदपि समाश्वासनं नेतव्य इव भाति । किं कुर्मः ? । (पुरो-निरीक्ष्य) आगच्छति मधुव्रता द्रुतं किमर्थम् ?

**मधुव्रता**—(प्रविश्य) अय्य ! अरुण ! कुदो तुह वअस्सो मुच्छिओ । (आर्य ! अरुण ! कुतः तव वयस्यो मूर्च्छितः ) ।

**अरु**—भद्रे ! कथमजानतीव सख्युर्मूर्च्छाकारणं पृच्छसि ?

**मधु**—जदि जाणेमि किं पुछिस्सं ? (यदि जानामि किं प्रक्ष्यामि) ?

**अरु**—किमन्यत्कारणमस्य पद्मिनीविश्लेषं विना मूर्छायाम् ?

**मधु**—(स्व) एदे जहत्थं ण मुणंति । तदो पुणोऽपि से विरहवेअणं वड्ढअंती तदो समएमि । (प्रकाशम्) अय्य ! एदं बोहेहि, समस्ससेमि । (एतौ यथार्थं न जानीतः । ततः पुनरपि अस्य विरहवेदनां वर्धयन्ती ततः शमयामि । (प्र) आर्य ! एतं बोधय, समाश्वासयामि । (अरुणः वस्त्रान्तेन वीजयन्)

**अरु**—सखे ! उत्तिष्ठ ।

**भास्क**—(उन्मीत्य नेत्रे) भद्रे ! किं तव सखी भ्रमरिका पद्मिनीमनुगता ?

1. आलोकमङ्गलकरी = दर्शनेन क्षेमङ्करी ।

**मधु**—को संसओ । कहं पद्मिणीए अणुगमणं विणा भमरिआजीवणं ? । (कस्संशयः कथं पद्मिन्यनुगमनं विना भ्रमरिकाजीवनम् ? ) ।

**भास्क**—हा ! भ्रमरिकाऽपि द्रष्टुं न लभ्यते ।

अवीक्षमाणो दयितामपुष्याः
संसर्गसम्प्राप्तमनोज्ञशीलाम् ।
आलीमहं वा कलयामि पार्श्वे
सङ्गेन मल्ल्या इव सौरभाढ्याम् ॥

**मधु**—अय्य ! कुदो परकळत्तं कामअन्तो एवं सोअसि ?
(आर्य ! कुतः परकलत्रं कामयमान एवं शोचसि ? ) ।

**भा**—हा कष्टम् । पद्मिनी परकलत्रं संवृत्तेति । इतः परं किमस्ति मे शोच्यम् ।

**मधु**—अय्य ! अरुण ! महप्पाणं एआरिसाणं मणं परकळत्तं ण कामइस्सदि खु ।
(आर्य ! अरुण ! महात्मनामेतादृशानां मनः परकलत्रं न कामयिष्यते खलु ? ) ।

**अरु**—तत्त्वमाह भवती ।

**भास्क**— (स्व)

रे चित्त ? कस्मात्परदारकामं भजत्सदा पापमुपैषि मूढ !
यद्वा प्रवृत्तिस्तव निन्द्यकर्मण्येतावदन्तं न कदाचिदासीत् ॥

(इति मुखं नमयति) ।

**अरु**— भद्रे !

न हि कामयते साध्वीं परदारतया स्थिताम् ।
किन्तु तामात्मविश्लेषान्म्रियमाणां तु शोचति ॥

**भास्क**—भद्रे ! त्वं क्व प्रस्थिताऽसि ?

**मधु**—इदो एव्व (इत एव) ।

**अरु**—किन्निमित्तम् ?

**मधु**—अज्जो समस्सणिज्जोत्ति महाराएण णियुत्तह्मि । (आर्यस्समाश्वासनीय इति महाराजेन नियुक्ताऽस्मि ) ।

**भास्क**—कथमाश्वासनीयोऽहं सम्प्रत्येतां दशां प्रपन्नः ।

मधु—किं भट्टदारिआए भद्दे मिळन्ते सुहसूअणं णिमित्तं ण दिट्टम् ।
(किं भर्तृदारिकया भद्रे मिलति शुभसूचकं निमित्तं न दृष्टम् ?) ।

भास्क—भद्रे !

तां पश्यति प्रथममिन्दुमुखीं कृशाङ्गीं
मय्यादरान्मम हि दक्षिणमक्ष्यवल्गत् ।
तां संस्पृशत्यथ च बाहुरसव्य एष
निष्कारणं द्रुतमवेपत भूपकन्याम् ॥

मधु—तारिसं णिमित्तं कहं भवे विफलम् ? (तादृशं निमित्तं कथं भवेद्विफलम् ?) ।

भास्क—कथमभूदिति भण ।

मधु—होदु । कहं वा भअवदीये ळच्छीए समाराहणं कामिदं ण करिस्सदि पदुमिणीए ।
(भवतु, कथं वा भगवत्या लक्ष्म्याः समाराधनं कामितं न करिष्यति पद्मिन्याः) ।

भास्क—कामितं नाकरोदिति ब्रूहि ।

मधु—तहा भणिदुं मह जीहा ण पसरइ । (तथा भणितुं मम जिह्वा न प्रसरति) ।

अरु—कुतः ?

मधु—तत्थ काळणं भवे । (तत्र कारणं भवेत् ) ।

अरु—किं जानासि तत्र कारणम् ?

मधु—देवीए भत्ती एव्व काळणम् । (देव्या भक्तिरेव कारणम् ) ।

भास्क—सखे ! किं वृथा विलम्बेन ? प्रवर्धय पावकम् ।

मधु—किं णिमित्तम् ? (किन्निमित्तम् ?)

भास्क—प्रवेशाय ।

मधु—कहिम् ? (क ?)

भास्क—अग्नौ ।

मधु—कस्स किदे । (कस्य कृते) ।

भास्क—शरीरत्यागाय ।

मधु—अतिरमणिज्जं सअळलोआणंदकारि तुह सरीरं ण खु उवेक्खणिज्जम् । (अतिरमणीयं सकललोकानन्दकारि तव शरीरं न खल्पेक्षणीयम् ) ।

**भास्क**— **यन्मे शरीरं दयिता स्मरन्ती सन्त्यजेदसून् ।**
**हतकस्यास्य रक्षायां न फलं वेद्मि किञ्चन ॥**

**मधु**—तुह सरीरं सुमरंती सा ण पाणे मुंचे । (तव शरीरं स्मरन्ती सा न प्राणान्मुञ्चेत्) ।

**भास्क**—किं तस्या मयि प्रणयातिशयमजानतीव ब्रूषे ?

**मधु**—जाणेमि एव्व । (जानाम्येव) ।

**भास्क**—सखे ! मुधा मां धनञ्जयं प्रवेष्टुकामं रुन्धे मधुव्रता ।

**मधु**—अहं ण करिस्सं तुह धणञ्जअप्पवेसरोहणम् । (अहं न करिष्यामि तव धनञ्जय-प्रवेशरोधनम्) ।

**भास्क**—भद्रे !

**त्वं दयाभरसम्पूर्णहृदयाऽद्य निवेदय ।**
**इमं कासारराजाय प्रणामं चरमं मम ॥**

(इत्यञ्जलिं धत्ते)

**मधु**—को णिदेसो पदुमिणीए ? (को निदेशः पद्मिन्याः ?)

**भास्क**—भद्रे ! किमर्थं परलोकं प्राप्तायाः तस्या निदेशं कामयसे ?

**मधु**—जदि परलोअं ण पत्ता ? (यदि परलोकं न प्राप्ता ?)

**भास्क**— **अलब्ध्वा मां प्रियं दैवात्परस्यापि वशं गता ।**
**यदि जीवति सा तस्यै निदेशोऽनुचितः खलु ॥**

**मधु**—(सस्मितम्) परवसं गआ जदि एव्व सा जीवइ ताए णिदेसो अणुइदो । (परवशङ्गता यद्येव सा जीवति तस्यै निदेशोऽनुचितः) ।

**भास्क**—(ससम्भ्रमम्) किं न परवशं गता ?

**मधु**—जदि पदुमिणी पिअं विणा परं पत्ता कहं कासारो जीवे । कहं वा भमरिआ । कहं वा अहं जीवेमि । (यदि पद्मिनी प्रियं विना परं प्राप्ता कथं कासारो जीवेत् ? कथं वा भ्रमरिका ? कथं वा अहं जीवामि ?) ।

**अरु**—सखे ! भद्राया वचनमस्माकं भद्रं जनयतीव । तन्न सम्भ्रमः कार्यः ।

**भास्क**—सखे ! मम समाश्वासनोपायोऽयम् ।

**मधु**—जहत्थं कहिअ तुह समस्सासणिमित्तं एव्व आअदह्मि । (यथार्थं कथयित्वा तव समाश्वासनिमित्तमेवागताऽस्मि) ।

**अरु**—भद्रे ! किं यथार्थम् ?

**मधु**—मए समं तुह्मे आअदा जदि सअं एव्व विण्णादं भवे जहत्थं । (मया समं युवां आगतौ यदि, स्वयमेव विज्ञातं भवेद्यथार्थम् ) ।

**अरु**—सखे ! सह भद्रया गत्वा तत्त्वं जानीवः ।

**भास्क**—न मे रोचते राजमन्दिरोपसरणम् ।

**अरु**—सखे ! या मधुव्रता भवतः पुरा पद्मिनीप्राप्तिमार्गं प्रादर्शयत्, सैवेदानीमपि भवदनुकूलतां प्राप्नोति । ततस्तदीयमनुसर्तव्यं वर्त्म ।

**भास्क**—यथा रोचते सख्ये । (इति परिक्रामति) ।

**मधु**—इदो इदो । (इत इतः) ।

**भास्क**—(अप) सखे ! केवलमबलावचनमनुसृत्य परिहास्यतां प्राप्तौ भवावः इति शङ्के

**अरु**—(अप) वयस्य ! मा शङ्किष्ठास्तथा ।

> अघटितघटनायां वा घटितविघटने यदस्ति चातुर्यम्
> अबलासु तन्मनुष्ये देवे वा नेति निश्चयान्मन्ये ॥

**भास्क**—भद्रे ! केन निर्मितोऽयं धरान्तर्गृहप्रवेशाय पन्थाः ?

**अरु**— सखे !

> पार्श्वद्वन्द्वोल्लासिहस्तावलम्बो
> नात्यायामोत्तुङ्गसोपानपङ्क्तिः ।
> अश्रान्त्याऽङ्घ्रिन्यासयोग्योऽतिहृद्यः
> शक्यो बालैरप्ययं शीघ्रमेतुम् ॥

(सर्वे महीगृहप्रवेशं नाटयन्ति) ।

**भास्क**—

> मसृणविमलचित्रग्रावभित्ति प्रमृष्ट-
> स्फटिकतलमशेषैर्वस्तुभिर्दर्शनीयैः ।
> विलसितमतितुङ्गे चोर्ध्वभागे वितान-
> प्रभृतिभिरभिरामं मण्डनैर्भूमिवेश्म ॥

अपि च,

मणिदीपावलिध्वस्तध्वान्तमुच्चासनव्रजम् ।
अतिकोमलनैर्मल्यहृद्यशय्योपधानकम् ॥

मधु—हळा! भमरिके! इदो इदो । (हला भ्रमरिके इत इतः) ।

(प्रविश्य भ्रमरिका, उभौ प्रणमति)

भास्क—भद्रे! अपि कुशलम्?

मधु—(अपवार्य) हळा, किंवि विणोदं करिअ तदो जहत्थं कहेहि । (हला! किमपि विनोदं कृत्वा ततो यथार्थं कथय) ।

भास्क—भद्रे, किमास्ते तव सखी कुशलिनी?

भ्रम—जा होन्तं अळद्धवती, ताए कहं कुशळम्? (या भवन्तमलब्धवती तस्याः कथं कुशलम्?)

भास्क—अयि मधुव्रते! पद्मिनीं दर्शयिष्यामीति त्वं मां कुतः प्रलोभितवत्यसि?

मधु—अय्य! जं सही भमरिआ कहिदवई तं अहं तुमं विण्णाविदवदी । (आर्य! यत्सखी भ्रमरिका कथितवती तदहं त्वां विज्ञापितवती) ।

भास्क—भ्रमरिके, क्व पद्मिनी?

भ्रम—जीमूअवसंगदेत्ति सव्वेहिं विदिअं खु । (जीमूतवशङ्गतेति सर्वैर्विदितं खलु) ।

भास्क—मधुव्रते, मां प्रतारयः ।

मधु—अय्य, ममस्सिं णो अवराहो । (आर्य! मयि नो अपराधः) ।

भास्क—हा प्रियतमे! (इति मूर्च्छति) ।

भ्रम—हळा! पदुमिणि, इदो पविसिअ फरिसिहि पिअम् । (हला! पद्मिनि, इतः प्रविश्य स्पृश प्रियम्) ।

(प्रविश्य पद्मिनी अभिमृशति भास्करम्)

भ्रम—हळा! तिरोहिआ होहि । (हला! तिरोहिता भव) ।

पद्मि—(तिरोधत्ते भित्त्यन्तरे) ।

भास्क—(उन्मील्य) (स्व) कुतोऽहं हिमजलपूर्णसरसि मज्जामीव!

भ्रम—अय्य, अवि समस्सासं गओसि? (आर्य! अपि समाश्वासं गतोऽसि?) ।

भास्क— भद्रे !

अत्र समाश्वासकरं वस्तु न पश्यामि मन्मथशरार्तैः ।
पुलकितमानन्देन खिन्नं गात्रं च जायते कस्मात् ॥

अरु—(अग्र) सखे ! समाश्वसिहि ! मम जीवितहेतोस्तव जीवातुरत्रैव वर्तते ।

भास्क—( सामोदम् ) भद्रे भ्रमरिके ! यदि दर्शयसि दृश्यां मम जीवितदानसुकृतं प्राप्स्यसि ।

भ्रम—( सस्मितम् ) (भास्करकरमवलम्ब्य) । इतो दृश्यताम् (इति पद्मिनीं दर्शयति)

अरु—सखे ! भद्रमस्तु (इति निष्क्रान्तः) ।

भास्क— जीमूतान्निर्गता सेयं हन्त सौदामनीलता ।
दिष्ट्याऽद्य विलयं नैति जगदेकविलासिनी ॥

भद्रे ! मधुव्रते ! भ्रमरिके !

युवाभ्यां प्रापिता साध्वी मम सन्तनुते मुदम् ।
श्रद्धया प्रज्ञया विद्या लम्भितेव विनिर्मला ॥

भ्रम—हळा ! अह्मो गच्छह्मो । (हला ! आवां गच्छावः) । (इति निष्क्रान्ते)

भास्क— मातः कैटभवैरिप्रेयसि भवतीं विना परं दैवम् ।
अस्ति किममर्त्यवन्द्ये स्वास्ति विधातुं नृणामलं भजताम् ॥

अयि जीवितसञ्जीविनि ! प्रदेहि परिष्वङ्गं मङ्गलाय मे ।

( इति पद्मिनीमालिङ्गन् निष्क्रान्तः ) ।

॥ इति पद्मिनीपरिणये षष्ठोऽङ्कः ॥

## ॥ अथ सप्तमोऽङ्कः ॥

(ततः प्रविशति बलाका नाम परिचारिका)

बलाका—एत्थ महाराओ जीमूदो जदा पदुमिणिं आणीदवन्तो तदो पहुदि ण मे विस्समो।
(अत्र महाराजो जीमूतो यदा पद्मिनीमानीतवान् ततः प्रभृति न मे विश्रमः)

(पुरो वीक्ष्य) अज्जो इरंमओ आअच्छइ। इमं पुछिस्सम्। (आर्य इरम्मद आगच्छति। इमं प्रक्ष्यामि)। (प्रविश्य)

इरम्मदः—अयि बलाके, क्व प्रस्थिताऽसि?

बला—अज्ज! पुप्फं ओचेदुम्। (आर्य! पुष्पमपचेतुम्)।

इरम्म—किमर्थम्?

बला—पदुमिणीए पूआणिमित्तम्। (पद्मिन्याः पूजानिमित्तम्)।

इर—पद्मिनीनियमः कीदृशः?

बला—अचरिअकरो। बंहमुहुत्ते उच्छिठ्ठइ। अंब कमळे, मइ मणोरहं पूरेहि। पाळेहि। तुमं एव्व सरणम्। तुमं विणा ण परा गईत्ति कहेइ। सुद्धेहिं उदएहिं सरीरं सोहेइ। तदाणिं इत्थिआजणं वि बही णिग्गमेइ।

(आश्चर्यकरः। ब्राह्मे मुहूर्ते उत्तिष्ठति। अम्ब कमले! मम मनोरथं पूरय। पालय। त्वमेव शरणम्। त्वां विना न परा गतिरिति कथयति। शुद्धैरुदकैः शरीरं शोधयति। तदानीं स्त्रीजनमपि बहिर्निर्गमयति)।

इर—शरीरशोधनसमये स्त्रीणामपि निस्सारणं किमर्थम्?

बला—तं ण मुणेमि। (तन्न जानामि)।

इर—अथवा मानवतीनां स्वगोपनीयाङ्गगोपनपरता तादृशी। ततः।

बला—तदो सुद्धं वसणं धरन्ती उपविसइ आसणे। तदो अङ्गुळीहिं णासिअं पीडेइ। तं ण विदिअं मए। (ततः शुद्धं वसनं धरन्ती उपविशति आसने। ततः अङ्गुलीभिर्नासिकां पीडयति। तन्न विदितं मया)।

इर—मुग्धे! स हि प्राणायामो नाम जपादौ जपान्ते च कर्तव्यं कर्म।

बला—तेण वि फलं होइ? (तेन किं फलं भवति?)

इर — पापशमनम् । उक्तं हि—

'यद्राञ्या कुरुते पापं कर्मणा मनसा गिरा ।
तिष्ठन्वै पूर्वसन्ध्यायां प्राणायामैर्व्यपोहति' ॥

इत्यादि । ततः ।

बला—तदो सीसे मुहे हिअए वि परिसइ । तं किम् । (ततः शीर्षे मुखे हृदयेऽपि स्पृशति । तत्किम्?) ।

इर — तन्न्यासाख्यं कर्म । उक्तं हि, 'न्यासस्स्यान्मन्त्रसन्नाहो न्यासहीनो निरर्थकः' इत्यादि । ततः ।

बला—तदो जवं करिअ पिट्ठचुण्णेहिं फलए रंगवल्लीं कुणइ । (ततो जपं कृत्वा पिष्टचूर्णैः फलके रङ्गवल्लीं करोति) ।

इर —मुग्धे! तत्केवलं न रङ्गवल्ली । किन्तु यन्त्रविन्यसनम् ।

बला—तं किंणिमित्तम्? (तत्किन्निमित्तम्?) ।

इर —पूजार्थम् । 'उक्तं हि, यन्त्रे वा प्रतिमायां वा पूजये' दित्यादि । ततः ।

बला—तदो तत्थ कुसुमेहिं जलेहिं चंदणेहिं पूएइ । (ततस्तत्र कुसुमैर्जलैश्चन्दनैः पूजयति) ।

इर —ततः ।

बला—तदो किं वि समं ओणेदुं अच्छि णिमीळिअ मुहुत्तं आसीणा एव णिद्दाइ । (ततः किमपि श्रममपनेतुमक्षि निमील्य मुहूर्तमासीनैव निद्राति) ।

इर —मुग्धे, न निद्राति श्रमापनोदनाय । किन्तु निमीलितनयना ध्यायति । ततः ।

बला—णिवेदिअं ओअणं, भक्खणं, छीरं, सहिए समं संभोजिअ सुहं वसइ । (निवेदित-मोदनं भक्षणं क्षीरं सख्या समं सम्भुज्य सुखं वसति) ।

इर —महाराजजीमूतस्तत्रागच्छति वा?

बला—मज्झे मज्झे आअदो बही वट्टमाणो जालरन्ध्रेण पेक्खइ । (मध्ये मध्ये आगतः बहिर्वर्तमानो जालरन्ध्रेण प्रेक्षते) ।

इर —तदानीं पद्मिनी कीदृशी भवति?

बला—णिमीळइ लोअणम् (निमीलयति लोचनम्) ।

इर —अहो नियमः । दृष्ट्याऽपि न वीक्षते पुमांसम् ।

बला—अज्ज ! केत्तिअं कालं एसा एव्वं णिअमे वट्टिस्सइ ? (आर्य ! कियन्तं कालं एषैवं नियमे वर्तिष्यते) ।

इर —प्रायोऽतीतं मासत्रितयम् । तद्विलम्बेन विना व्रतं समाप्यते ।

बला—अज्ज ! किंवि कहेदुं भीअह्मि । (आर्य ! किमपि कथयितुं भीताऽस्मि) ।

इर —भण निर्भया ।

बला—अदिसुंदरी जुवई बुद्धिसाळिणी सा कहं मळिणसरीरं वुद्धं जडप्पइदिं इमं कामइस्सइ ? (अतिसुन्दरी युवती बुद्धिशालिनी सा कथं मलिनशरीरं वृद्धं जडप्रकृतिमिमं कामयिष्यते ?) ।

इर — वृद्धो बुद्धिविहीनो दुर्भगदेहः पुमान् सुरुचिगात्रीम् ।
तरुणीं यः कामयते तस्मान्न परो जनेन परिहास्यः ॥

बला—अज्ज ! सिग्घं गच्छेमि । जदो भमरिआकोवो होस्सइ पुप्फाहरणविळंबेण । (आर्य ! शीघ्रं गच्छामि । यतो भ्रमरिकाकोपो भविष्यति पुष्पाहरणविळम्बेन) ।

इर —भद्रे ! गच्छ सत्वरम् । अहमपि महाराजनिदेशात्पद्मिनीवासवेश्म परितः परिपालनाय भटान् व्यग्रीकरिष्यामि । (इति निष्क्रान्तौ)

मिश्रविष्कम्भः ।

(ततः प्रविशति सह भ्रमरिकारूपधारिणा मिलिन्देन पद्मिनीवेषधारी कुमुदाकरः) ।

कुमु—सखे ! नेतः परं सोढव्यो मे कौमुदीविश्लेषः ।

मम हृदि निपतन् रुजं विधत्ते मदनशरो नितरां जवेन यावत् ।
क्वचिदिह विषये स्ववश्यकार्ये तदहमहो निदधामि तावदन्तः ॥

मिलि—सखे ! हृदयस्य व्यथानिवृत्तये कार्यान्तरव्यग्रताकरणमेव महानुपायः ।

कुमु—प्रायोऽतीतं मासत्रयं योषिद्वेषधारिणोरावयोः । कथं जीमूतमत्तेभयोर्भयोत्पत्तिः ? कथं पद्मिन्या भास्करावाप्तिः निश्चला ? । कथं कौमुदीपरिष्वङ्गो मम भविष्यति ?

मिलि—वयस्य ! मा स्म विचिन्तयः । भगवच्छारदानन्दसन्दिष्टमार्गेण भगवन्तं हनूमन्तं भजमानस्य भवतस्सर्वो मनोरथस्सेत्स्यति ।

कुमु—स गुरुः मां प्रयाणसमये रहस्येवमादिशत् ।

मिलि—कथमिव ?

कुमु— मन्त्रं मयेमं जपतः प्रदत्तं स्तुत्याऽनया ते स्तुवतः सुभक्त्या ।
श्रीरामदूतं निखिलेष्टसिद्धिः स्यादापदः प्राप्नुयुराशु नाशम् ॥ इति

मिलि—सखे ! सा स्तुतिः कीदृशी ? यदि न गोपनीया श्रावयितुमभ्यर्थये ।

कुमु—गोप्यमपि सुहृदे प्रकाश्यं खलु । तदवधीयताम् ।

मिलि—अवहितोऽस्मि ।

कुमु— वन्दारुं दाशरथेर्मन्दारं कश्चिदाश्रये भजताम् ।
वृन्दारकनव्यगुणं मन्दारितरावणात्मजं समरे ॥

काहं पापकृदग्र्यः क्व च तव कृतिभिः प्रसाद इह लभ्यः ।
भगवंस्तथाऽपि मह्यं प्रसीदसीत्यत्र हेतुरनुकम्पा ॥

अनिलसुत नाथ भगवन्ननिशं ते पादसंस्मृतिर्यदि मे ।
क्वाघं क्व च विपदार्तिः क्वारिः क्व च मे क्व चात्र दुष्कीर्तिः ॥

धैर्यं सर्वविधं मे नाना चिन्ता कपीन्द्र ! शिथिलयति ।
किं करवाणि रघूणां किङ्कर पत्युः कृपानिधे पाहि ॥

अनुभूता बहुविपदो ननु ते विदितं समस्तमनिलसुत ।
शृणु किञ्चिद्दासवचः सोढुं शोकं न शक्नुयामुपरि ॥

अनुभूयैव व्यसनं प्राक्तनपापं क्षयं प्रणेयमिह ।
इति चेत् त्वामस्मरतां को भेदः स्तावकस्य मम च विभो ॥

निर्बन्धनात्येप हि मामिति मारुतपुत्र मा रुषं यासीः ।
नाथानन्यशरण्यो निवेदनीयं निवेदयामि तव ॥

चण्डकरस्त्वं नमतां खण्डयितुं सर्वपापसन्तमसम् ।
उदितो दितिसुतविमतं सततं स्वान्तर्हरे हरिं बिभ्रत् ॥

अनलोऽस्यनिलसुत त्वं लङ्कादाहाय नाथ सम्भूतः ।
अनलत्वं न च धत्से भीमात्मजयान्वितो यतश्चित्रम् ॥[1]

1 अनलत्वम् = नलेतरत्वम् । भीमात्मजया = भौम्या । भीमात्मनां रक्षसां जयेन च ।

चन्द्रस्त्वं नाथ सतामन्तःकरणेन्दुकान्तमत्यच्छम् ।
सरसीकर्तुमुदीतः सरसीरुहबन्धुसम्भवामात्य ! ॥

राघवसन्देशहरस्तवमेतं सर्वशोकभीतिहरम् ।
यः पठति तस्य सर्वाभीष्टावाप्तौ न कापि विचिकित्सा ॥

मिलि—सखे !

बुद्धिर्बलं यशो धैर्यं निर्भयत्वमरोगता ।
अजाड्यं वाक्पटुत्वञ्च हनुमत्स्मरणाद्भवेत् ॥

इति पवनतनयस्मरणमात्रस्य बुद्ध्यादिप्रदत्वमुक्तम् । किं पुनः स्तुतेः । किञ्च, पवनसम्भवमहिम्ना[1] जीमूतनाशः स्यादेव ।

( प्रविश्य )

बलाका—सामिणि ! एदं कुसुमम् । (स्वामिनि एतत्कुसुमम्) (इत्यर्पयति) ।

मिलि हञ्जे ! किं कुणइ जीमूअराओ ? (हञ्जे ! किं कुरुते जीमूतराजः ? ) ।

बला - देवी ! पदुमिणीए संगमस्स सुहं वेळं पुच्छइ देवण्णजणम् । संभरेइ कत्थूरिम्, चंदणं, हिमंबु, पुप्फं, अण्णं जंजं भोअवत्थु । (देव्याः पद्मिन्याः सङ्गमाय शुभां वेळां पृच्छति दैवज्ञजनम् । संभरति कस्तूरीं चन्दनं हिमाम्बु पुष्पम् अन्यद्यद्-भोगवस्तु । )

मिलि—हञ्जे ! तं भण पदुमिणी तुह संगेण सुहं कामअंती किंवि णिमित्तं दट्ठूण अत्तणो इदो परिब्भंसं चितअंन्ती वट्टइति । (हञ्जे तद्भण पद्मिनी तव संगेन सुखं कामयमाना किमपि निमित्तं दृष्ट्वाऽऽत्मनः इतः परिभ्रंशं चिन्तयन्ती वर्तत इति ।

बला—जहा आणवेति भट्टिणी ( यथाऽऽज्ञापयति भर्त्री ) (इति निष्क्रान्ता)

कुमु—सखे ! आगमिष्यति पापो जीमूतः । तं यथोचितं ब्रूहि ।

मिलि—सखे ! वक्ष्यामि यथाभवदभिहित यथामति ।

( झटिति प्रविश्य )

जीमूतः—भद्रे भ्रमरिके, का तव सख्याः कातरता । ?

मिलि—अय्य, णिमित्तदंसणादो तुमं उद्दिसिअ एव्व चिन्तेइ । (आर्य ! निमित्तदर्शनात् त्वां उद्दिश्यैव चिन्तयति) ।

1. पवनात् सम्भवेन महिम्ना, वायोः शक्त्या मेघानां शीर्यमाणत्वात् ।

जीमू—मा चिन्तयतु मामुद्दिश्य प्रिया ।

उत्तुङ्गपदभाजं मां सदा वज्रबलान्वितम् ।
सर्वतोमुखसञ्चारं कोऽस्ति च्यावयितुं पटुः ॥ [1]

मिलि—(अपवार्य) जीमूतं च्यावयितुं शारदानन्दं विना न कोऽपि समर्थः । (प्रकाशम्) अय्य तुमं तारिसो एव्व । किंदु चिळादो मत्तेभओ सहिं मह ओहरिदुं समअं पडिवाळेत्ति । ततो अच्चाहिदं संकइ हिअअम् । (आर्य ! त्वं तादृश एव । किन्तु चिरान्मत्तेभकः सखीं ममापहर्तुं समयं प्रतिपालयति । ततोऽत्याहितं शङ्कते हृदयम् ।

जीमू— जीमूतवशगामेनां मत्तेभः किं करिष्यति ।
पद्मिनीं हरिणाक्रान्तां किङ्कुर्याद्वनगः करी ॥

मिलि—अय्य ! किं करिणो वि बलसाळी हरिणो । (आर्य ! किं करिणोऽपि बलशाली हरिणः) ।

जीमू—भद्रे ! हरिणा[2] सिंहेनाक्रान्तमित्युक्तम् ।

मिलि—(निश्वस्य) तुह वअणंवि अप्पिअं सूएदि । किं कादव्वम् । (तव वचनमप्यप्रियं सूचयति । किं कर्तव्यम् ?)

जीमू—भद्रे ! धीरा भव ।

मिलि—तुमस्सिं विज्जमाणे णो भीई (त्वयि विद्यमाने नो भीतिः) ।

जीमू—तथा (इति निष्क्रान्तः)

कुमु— उत्थायार्कः प्रथममलो गाः प्रयुञ्जन्पदे सौ
विष्णोः पश्चात् द्विजततिमरं धावयन्निस्तमस्कः ।
सन्मार्गस्थो जगति कलयन् कर्म तत्तत्समस्तं
मित्रत्वं स्वं निखिलजनतां नन्दयन् संव्यनक्ति ॥

करोतु वा तापमयं जलस्य तनोतु वा शोषमतीव पूषा ।
अस्योदयं काङ्क्षति सर्वलोको दोषं पिधत्ते बहुता गुणानाम् ॥

१. वज्रमिव बलान्वितम् । वज्रबलेनाशनेर्बलेन च । सर्वतोमुखस्सञ्चारः यस्य । सर्वतोमुखस्य जलस्य सञ्चारो यस्मादिति च ।

२. हरिणा = सिंहेन हरिणेन एणेन च ।

मिलि— तत्तादृगोजसि रवावधुनाऽस्तमस्मिन्
याति प्रकृष्टगुणशालिनि राजनीव ।
हिंसन्ति दुर्जनगणा इव लोकमत्र
ध्वान्तान्यनर्गलनिजप्रसराणि कामम् ॥

सन्तो यथा खगगणाः क्वचन प्रलीना
नीतिर्यथा सरसिजेषु विलीयते श्रीः ।
वैदुष्यवद्विफलतां नयनं प्रयाति
धर्मो यथा क्षयमुपैति जनप्रचारः ॥

कुबु— चौर्यानुकूलश्चोराणां जाराभिसरणोचितः ।
स्वैरिणीनामयं कालः परेषां वञ्चनक्षमः ॥

मिलि—सखे ! एतस्मिन्नेव महान्धकारसमावृतसमस्तव्योमावकाशे समये जीमूतः प्रतार्यः आवाभ्याम् । यदत्र स्वपन्ति भटाः ।

कुमु—सुप्ता भ्रमरिकेव भवतु भवान् मुहूर्त्तम् ।

मिलि—तथा (इति निष्क्रान्तः) ।

कुमु—(स्त्रीवेषं परिहृत्य मृदुपदविन्यासं परिक्रम्य) कोऽत्र राजमन्दिरद्वारे

(प्रविश्य)

दौवारिकः—कः पृच्छति ?

कुमु—झटिति निवेद्यतां महाराजाय कासारकुमारः समागत इति ।

दौवा—तथा (इति निष्क्रम्य पुनः प्रविश्य) इत इतो महाराजः ।

(प्रविशति जीमूतः)

कुमु—(दृष्ट्वा) (स्वगतम्)

जीमूतोऽयं कुमतिजनताग्रेसरो द्वारपाल-
प्रोक्तां स्यालस्तव स सजवायात इत्युक्तिमाशु ।
श्रुत्वा निद्रामपि परिहरन्नुत्थितो रक्तनेत्रो
भ्रश्यद्वस्त्राभरणकुसुमस्तूर्णमभ्येति धूर्तः ॥

(प्रकाशम्) आवुत्त! अपि कुशलम्?

**जीमू**—राष्ट्रिय! अपि स्वागतम्?

**कुमु**—यदि द्रक्ष्यामि भगिनीं, स्वागतमेव मे।

**जीमू**—किमत्र संशयनिमित्तम्!

**कुमु**—(निश्वस्य) भगवन् वासुदेव! प्रसीद शान्तमस्तु सोदरीविषयदृष्टं दुर्निमित्तम्।

**जीमू**—कीदृशं तत्?

**कुमु**—
स्वप्ने निरीक्ष्य जनको मम पद्मिनीं तां
ध्वस्तां स केनचिदरण्यमतङ्गजेन।
मां प्राहिणोदधिकदूनमनास्स्वसार-
मावुत्तपत्तनमुपेत्य विचारयेति॥

**जीमू**—हन्त! जीमूतपरिपालनप्रथमभाजनीभूतायां पद्मिन्यां किं दुर्निमित्तेनाकिञ्चित्करेण।

**कुमु**—(वामाक्षिस्पन्दनमभिनयन्) आर्य! निर्हेतु स्पन्दते वामनेत्रम्। किं वा भविष्यति? (इत्यश्रूणि मुञ्चति)।

**जीमू**—भद्र! कृतं चापलेन।

**कुमु**—
आस्कन्दने मे स्वसुरुग्ररूपो मत्तेभकः कौतुकितां दधानः।
प्रतीक्षमाणः समयं सदाऽऽस्त इत्यन्तरङ्गं व्यथतेऽधिकं नः॥

**जीमू**—
परितः पटलेनात्र भटानां शस्त्रधारिणाम्।
भवने पाल्यमाने स किं कुर्यात्पद्मिनीं स्थिताम्॥

**कुमु**—(स्वगतम्) जाल्म। तव भवनरक्षिणां जाग्रता मया दृष्टा खलु स्वरूपेण निर्गच्छताऽवरोधात्। (प्रकाशम्) आवुत्त! तथा न मन्तव्यम्।

उद्यानगामिनीमेतां मत्तेभप्रणिधिः पुरा।
हर्तुमम्बरतो धावन्भास्करेण हतोऽपतत्॥

**जीमू**—स को नाम?

**कुमु**—तुहिनमण्डलाभिधेयः।

जीमू—स पापात्मा विनष्टः खलु ।

कुमु—तदीयकुटुम्बिनी हिमानी नाम कापि कापालिकी महापापा खलु ? सा निहते पत्यौ पुरा कथमपि पद्मिनीं ग्लपयिष्यामीति प्रतिश्रुत्य गता ।

जीमू—आस्यतामासने ।

कुमु—किमुपवेशनेन ? न शक्नोमि चेतः पर्यवस्थापयितुम् ।

जीमू—किङ्कर्तव्यमधुना ?

कुमु—प्रथमं दर्शय भगिनीवाससदनम् । तत्र तां निरीक्षमाणस्य मम हृदयं समाश्वस्तं भवेत् ।

जीमू—(विहस्य) कथं केसरिसमाक्रान्तकन्दराधिष्ठितमणेर्हरिणापहरणशङ्का ! यद्यपि, गत्वा पश्यामः । (इति परिक्रामतः) (मिलिन्दः शयानः प्रविशति) ।

कुमु—(स्वगतम्) सखा स्वपन्निव जागर्ति । (प्रकाशं) कुतोऽत्र शेते निस्सहाया भगिनी

जीमू—भ्रमरिका बहिर्निर्गता स्यात् कस्यापि कृते ।

कुमु—(स्व) कुमुदाकर एव बहिर्निर्गतः कस्यापि कृते । (मिलिन्दसमीपं गत्वा) (प्रका) भद्रे, उत्तिष्ठ ।

मिलि—(ससंभ्रममुत्थाय) कुदो ण दीसइ पिअसही । (कुतो न दृश्यते प्रियसखी) (इति परितो वीक्षते) ।

कुमु—हा ! न दृश्यतेऽत्र वत्सा ।

जीमू—दृश्यताम् परितः । (इति सत्वरमुपसर्पति)

मिलि—हळा ! पदुमिणि कहिं गदासि ? कुदो ण दीससि ? हदओ मत्तेभओ पुव्वंविअ-दाणिंवि तुमं वञ्चेदुं पउत्तो किअत्थो आसि । (हला पद्मिनि, क गतासि कुतो न दृश्यसे ? हतको मत्तेभकः पूर्वमिवेदानीमपि त्वां वञ्चयितुं प्रवृत्तः कृतार्थ आसीत् । (इति रोदिति)

कुमु—हा वत्से ! किं मत्तेभवञ्चनावागुराबद्धाऽसि ?

जीमू—अलं विलापेन । वर्तेत सौधान्तरे ।

मिलि—तत्थ पेक्खामो । (तत्र द्रक्ष्यामः) (इति परिक्रामन्ति)

कुमु—(अपवार्य) पितृगृहे भर्त्रा सह वर्तमाना कौमुदी कथमत्र सौधान्तरे ?

**मिलि**—(अपवार्य) पद्मिनीति भण ।

**कुमु**—(स्वगतम्) हन्त मे कौमुदीपरता, या स्खलयति गोत्रम् । (परिक्रामन्ति)

**जीमू**—(स्व)

**यस्याः परिष्वङ्गनिबद्धकामः प्रतीक्षमाणस्समयं व्रतान्ते ।**
**आसं तदासौ समुपस्थितायां हा हन्त साऽत्येति दृशोः पदं मे ॥**

(प्रकाशम्) सर्वत्र विचेतव्याऽत्र प्रिया ।

**कुमु**—हन्त महाशूरस्य तव वशं प्रापितायाःस्वसुः स्वसुहृदपेक्षया किमिति मन्यमानोऽहं अन्यकार्यनिरतोऽभूवम् ।

**मिलि**—हळा ! तुमस्सिं पावस्स मत्तेभस्स वसं गदाए किं मह जीविदेण । तदो विसं भक्खिअ विमुंचेमि पाणे । (त्वयि पापस्य मत्तेभस्य वशंगतायां किं मम जीवितेन । ततो विषं भक्षित्वा विमुञ्चामि प्राणान् । (इति उरस्ताडयति)

**कुमु**— **न दृश्यते तत्र सहोदरीति तातो ममोक्तिं स निशम्य सद्यः ।**
**असूनुपेक्षेत न संशयोऽत्र ततो मया तद्वदता न भाव्यम् ॥**

तदिहैव प्राणा मोक्तव्याः ।

**जीमू**—अरे दुरात्मन् ! मत्तेभ ।

**अगणयन्मम शौर्यमनल्पकं प्रियतमामपहृत्य सुदुर्मतिः ।**
**निपतितोऽसि मदीयरुषः पदे क्व शरणं तव लभ्यमहो भवेत् ॥**

**कुमु**—आर्य ! स दुरात्मा सत्वरं निपात्यः । अन्यथा क्वचिद्वने निलीनो भविष्यति भवतो भीतः ।

**जीमू**—दन्तान् कटकटापयन्

**पातकी यातु पाताळं पातु वा तं सुरेश्वरः ।**
**भूत्वा क्रोधस्य मे पात्रं मत्तेभः किं स जीवतु ॥**

**मिलि**—(अप) सखे ! दिष्ट्या दृढीभूतं मत्तेभवैरं जीमूतस्य ।

**कुमु**—त्वर्यतां रिपुनिग्रहाय ।

**जीमू**—भद्र, यावदानेष्यामि प्रणयिनीं तावदिहास्यतां युवाभ्याम् ।

**कुमु**—यथा रोचते भवते ।

**जीमू**— मत्तेभकं मित्रकुलेन साकं नीत्वाऽत्र पक्षिव्रजभक्ष्यभात्रम् ।
तां पद्मिनीं तत्करमर्शद्नामानन्दयन्मानमहं भजामि ॥

(इति निष्क्रान्तः)

**कुमु**—सखे ! प्रायः फलितोऽभूद्द्योगीन्द्रोपायः ।

**मिलि**—वयस्य ! सर्वं सुष्ठु परिणमेत चक्रपाणिरमणीप्रसादमहिम्ना ।

**कुमु**—किमितःपरमिह निवासेन । निगूढं गत्वा जीमूतस्य मत्तेभविषये चेष्टितं पश्यावः ।

(इति निष्क्रान्तौ)

॥ इति पद्मिनीपरिणये सप्तमोऽङ्कः ॥

## ॥ अथ अष्टमोऽङ्कः ॥

( ततः प्रविशति कासारः विदूषकश्च )

**कासा**—सखे ! किं गोपयसि स्नेहातिरेकभणितं मिथो वृत्तम् ?

**विदू**—वअस्स ! जाव जीमूअणासं जाणेमि ताव मह हिअआदो पदुमिणीए वुत्तन्तो ण बही णिग्गमिस्सइ (वयस्य यावज्जीमूतनाशं जानामि तावन्मम हृदयात्पद्मिन्या वृत्तान्तो न बहिर्निर्गमिष्यति) ।

**कासा**— वत्सा वल्लभसङ्गमोदितमनाः क्षोणीगृहे वर्तते
वत्सो मे कुमुदाकरः कपटतो जीमूतगेहं गतः ।
तस्यान्तःकरणं निमग्नमनिशं द्राक्कौमुदीरोचिषि
प्राप्ता साऽरिवशं कदेदमखिलं गच्छेद्विपाकं शुभम् ॥

**विदू**—कोमुईं सुहाअरजादं मत्तेभओ कस्स किदे घेत्तूण ठावेइ ? ( कौमुदीं सुधाकरजातां मत्तेभकः कस्यकृते गृहीत्वा स्थापयति ? )

**कासा**—निजनन्दनस्य कलभस्य कलत्रीकरणाय ।

**विदू**—कुदो विळंबो तस्स विवाहे ( कुतो विलम्बस्तस्य विवाहे ? ) ।

**कासा**—सुधाकरप्रार्थनया समागतोऽहं व्रतोपदेशायेति वदता शारदानन्देनोपदिष्टं व्रतं भर्तृचिरायुष्करमनुतिष्ठति सा । तदनन्तरं विवाहोऽति मन्वानो मत्तेभोऽधिकं सुतस्य वयः काङ्क्षन् प्रतीक्षते व्रतसमाप्तिम् ।

**विदू**—कआ वुदसमत्ती ( कदा व्रतसमाप्तिः ? ) ।

**कासा**—अचिरादिति मन्ये ।

**विदू**—वअस्स, कोमुईए आराहणस्स किदे सारआणंदेण कस्स हेदुणो देवआपडिमा पदुमिणीसरिसी किदा ? ( वयस्य कौमुद्या आराधनस्य कृते शारदानन्देन कस्य हेतोः देवताप्रतिमा पद्मिनीसदृशी कृता ? ) ।

**कासा**—को जानाति तस्य योगिनो हृदयम् ?

**विदू**—दाणिं सो कहिं गओ ? ( इदानीं स क्व गतः ? ) ।

**कासा**—वत्सयोः स्पष्टविवाहकृते समानेतुमुदयधरं स्वयं यातः ।

**विदू**—चतुरो जोई ( चतुरो योगी )

**कासा**—वत्स ! वृत्तान्तावगमाय जीमूतनगरं निगूढं नीतो मया चारोऽपि भूयो न दृश्यते ।

**प्रतिहारी**—( प्रविश्य ) देव ! चारो पढिहारभूमीं गओ ( देव, चारः प्रतिहारभूमिं गतः ) ।

**कासा**—प्रवेश्यताम् ।

**प्रति**—तह (तथा) (इति निष्क्रम्य तेन सह पुनः प्रविश्य) इदो इदो (इत इतः) । (चारः राजानं प्रणमति) ।

**कासा**—अपि सख्या सह कुशली वत्सः ?

**चारः**—कुसळी वट्टइ । तुह णिदेसादो तुवरिअं गच्छन्तो अहं जीमूअपुरादो मत्तेभअणअरं पडट्ठमाणं कुमारं सह सहिणा मज्झेमग्गं दिट्ठवं । (कुशली वर्तते । तव निदेशात् त्वरितं गच्छन् अहं जीमूतपुरात् मत्तेभकनगरं प्रतिष्ठमानं कुमारं सह सख्या मध्येमार्गं दृष्टवान् ) ।

**विदू**—तदो ( ततः ) ।

**चारः**—सो एदं ळेहं दाऊण विसट्ठवंतो मम् । ( स एतं लेखं दत्त्वा विसृष्टवान्माम् ) ( इति लेखं समर्पयति ) ।

**कासा**—( आदाय वाचयति ) " स्वस्ति श्रीमत्तातपादानां प्रणामसहस्रं समर्प्य विज्ञाप्यते । श्रीमदनुग्रहात्सहवयस्यः कुशली वर्ते । भगवता शारदानन्देन समुपदिष्टमुपायमवलम्ब्य पद्मिनी भद्रा मत्तेभकेन हृतेति जीमूतस्य हृदये दृढीकृतं तस्मिन्वैरम् । ततो जीमूतः कामं क्रुद्धः नेष्यामि मत्तेभकं क्षयमिति प्रतिज्ञाय प्रस्थितः । आवामपि तत्र तच्चेष्टितं द्रष्टुं प्रयावः । सर्वं भगवत्या अरविन्दमन्दिरायाः प्रसादात् भगवतो गन्धवहनन्दनस्य कारुण्याच्च शुभपरिणामं भवेदिति " ।

**कासा**—( सहर्षम् ) सखे दिष्ट्या शृणुमः कुशलम् वत्सस्य । रे चार ! कुतस्ते विळम्बः सरणावेतावान् ?

**चारः**—तत्थ तत्थ विस्समिअ किंवदंतिं जाणंतो आअदोम्हि । ( तत्र तत्र विश्रम्य किंवदन्तीं जानन्नागतोऽस्मि ) ।

कासा—को विशेषः किंवदन्त्याम् ?

चारः—जीमूओ अग्गिगोळेहिं धज्जइत्ति सुणीअदि । (जीमूतः अग्निगोळैर्दग्धत इति श्रूयते)।

कासा—सखे! यदि जीमूतः स्यान्निहतः कुतो विळम्बते वत्सः सख्या ?

विदू—कमेण णादव्वम् । (क्रमेण ज्ञातव्यम्)।

कासा—रे, एतावदेव ?

चारः—अह इम् । (अथ किम्)।

कासा—गम्यताम् । स्वनियोगः अशून्यः क्रियताम् ।

चारः—(निष्क्रान्तः)।

कासा—कथमग्निगोळदाहो जीमूतस्य ?

विदू—को मुणइ जोइणो उवाअम्? (को जानाति योगिन उपायम्?)।

प्रतिहारी—(प्रविश्य) देव्व. मिळिंदो पाडिहारभूमिं गओ । (देव, मिळिन्दः प्रतिहारभूमिं गतः)।

कासा—(ससंभ्रमम्) तूर्णं प्रवेश्यताम् ।

प्रति—(निष्क्रम्य प्रविश्य मिळिन्देन सह) इदो इदो (इत इतः)।

कासा—भद्र! किं कुशली तव सखा ?

मिलि—कुशलीव!

कासा—(स्वगतम्)

व्यनक्ति यस्य मुखं हर्षं व्यथालेशेन मिश्रितम् ।
वचनं च तथा पश्यन् शृण्वंस्तत्कातरोऽस्म्यहम् ॥

(प्रकाशम्) भद्र! किं प्रतिपन्नं जीमूतेन)

मिलि—यद्रामभद्रकळत्रं कामयमानेन दशाननेन ।

कासा—भद्र! स हन्तव्यं स्वेन मत्तेभमहत्वाऽप्युपरतः ?

मिलि—हत्वैव!

कासा—भद्र! तथा द्वावपि विनष्टौ यदि, वत्सः क वर्तते, कीदृशः ?

**मिलि**—मत्तेभपुरे मेघनादविजितो मेघवाहन इव लङ्कानगरे।

**कासा**—हा! मम वत्सः कारागारं नीतः ?

**मिलि**—अथ किम्।

**कासा**—भद्र! जीमूतस्य मत्तेभकरोषसंभवावधि विदितो वृत्तान्तः। ततः परं यथाक्रममभिधीयतां निरवशेषम्।

**मिलि**—तदनु "पद्मिनीं मत्तेभ एवापहृतवा" निति दृढनिश्चयं नीतो जीमूतः।

धनुर्दधदतिज्वलन्नयनजस्फुलिङ्गस्फुर-
त्तटिद्बहुलगर्जितः प्रविकिरन् शरौघं मुहुः।
निजस्तनितनिस्वनश्रवणरुष्टमत्तेभके
स्वनत्ययमपातयत्कठिनमायुधं स्वं द्रुतम्॥

**विदू**—तदो। (ततः)।

**मिलि**—ततः किं वक्तव्यं वज्रपातेन मत्तेभको व्यभेदीति।

**कासा**—सखे! पुरैव व्याहार्षीत खलु महायोगी। यदि दैवमनुकूलं जीमूतान्मत्तेभके वज्रं निपतिष्यतीति। जीमूतस्य शिखिना केनापि हरिणा च विनाशस्स्यादि" ति चाभ्यधायि महात्मना। कुतो वा समुत्पत्स्यते स हरिः शिखी च ?

**मिलि**—एवं तत्र विभिन्नमस्तके मत्तेभके मुखरितमासीद्दिशां दशकं हाहारवेण।

**कासा**—भद्र! तदिदं त्वया विदितं दृशा, किमुत श्रवसा ?

**मिलि**—अवगतमेतदावाभ्यां दृशैव।

**कासा**—(स्व) एतावदन्तं वत्सो न विनाभूतसख इति ज्ञायते। उपरि शृणुमः—(प्र) ततः ?

**मिलि**— धावन्नसाधारणजातकामः स राजधाम्नि प्रतिमां मनोज्ञाम्।
सुजातजीवामिव वीक्ष्य काञ्चिद्गाढं समालिङ्गदहो भुजाभ्याम्॥

**कासा**—सैव शारदानन्दप्रतिभासमुत्पादिता वत्साप्रतिकृतिः स्यात्।

**विदू**—तदो तदो (ततस्ततः)।

**मिलि**—ततः किमप्याश्चर्यं दृष्टम्।

**कासा**—कथमिव ।

**मिलि**— परितः प्रतिमामध्यनिस्सरद्वह्निगोळकैः ।
अदाहि स मदान्धो द्राक्तदा हि सुदुराशयः ॥

**विदू**—कुदो एदम् ? (कुत एतत् ?) ।

**मिलि**—प्रतिमायां निपीडितायामन्तर्जातो जातवेदाः पारदसुवर्चलगन्धकादिनिर्मितगोळेषु ज्वलितो दहेद्वहिः प्रसरन् दारूण्यपि ।

**कासा**—भद्र ! तत्समीपवर्तिनी मदा कौमुदी किन्तद्विपत्तौ निपतिता ।

**मिलि**— जीमूतमालोक्य समापतन्तं गर्जन्तमेषा ललिताङ्गयष्टिः ।
उत्थाय शीघ्रं क्वचिदात्तभीतिर्व्यलीयताळीजनतानुयाता ॥

**कासा**—हन्त ! कामिनां विवेकराहित्यम् ।

सौन्दर्यदूरीकृतचित्तधैर्याः स्त्रीणां पुमांसः सुविवेकशून्याः ।
गम्या न गम्येयमिति प्रतर्कं विहाय सद्योऽभिमृशन्ति मोहात् ॥

**विदू**—अच्चरिअं जीमूअकामपरवसत्तणम्, जदो पडिमं वि पदुमिणीए मोहादो आळिंगिदवंतो । (आश्चर्यं जीमूतकामपरवशत्वम्, यतः प्रतिमामपि पद्मिन्या मोहादालिङ्गितवान् ) ।

**कासा**— शौर्येण विद्याविभवेन वाऽपि वित्तेन वा येऽत्र भवन्ति मत्ताः ।
विनाश्य तान् लोकसुखं विधातुं धाता विना स्त्रीं न परं ससर्ज ॥

**विदू**—तहा एव्व । अण्णहा रावणमुहा दुरासआ कहं विणासं णेदुं सक्का होन्ति । (तथैव । अन्यथा रावणमुखा दुराशयाः कथं विनाशं नेतुं शक्या भवन्ति ) ।

**कासा**—सखे !

बलेषु सर्वेष्वपि वेद्मि बुद्धेर्बलं वरिष्ठं न हि संशयोऽत्र ।
मत्तेभजीमूतमदप्रशान्तिं कर्तुं क्षमं योगिमतिं विना किम् ॥

**विदू**—अह इम् । (अथ किम् )

**कासा**—भद्र ! ततः ?

**मिलि**—अथ जीमूतानुयायिनस्सर्वेऽपि 'पद्मिनीव्रतमहिम्ना दग्धोऽसमये संस्पृशंस्तां महाराजः । किं ब्रूमो वयं शारदानन्दमहिमान' मिति कथयन्तः सत्वरं स्वपदं प्रपेदिरे ।

मत्तेभपुरवास्तव्यास्तु " किं वक्ष्यामः कौमुदीसमुपास्यमानदेवतामाहात्म्यम्, यतस्त-त्प्रतिमास्पर्शमात्रेण प्रदग्धो जीमूतः। विचित्रः शारदानन्दमन्त्रप्रभावः " इति ससंभ्रमा व्याहार्षुः।

**कासा—** विद्वेषिवृत्तेक्षुरसं मदीये चित्ते पिबत्यद्य चिरोत्थतापे।
वत्सो न्यबन्धीति विचारतीक्ष्णतृणांकुरो विध्यति तत्तु मध्ये ॥

मिलिन्द! किमहासीत् प्राणान् जीमूतः?

**मिलि—**नाद्यापि जहाति प्राणान् दग्धतनुरपि सीतापतित्रयानलेनेव रावणो जीमूतः। रघु-वीरस्येव करेण कस्य चिर् तेजोनिधेरसून् विसृजेदिति मन्ये।

**कासा—**तादृशतेजोनिधिर्भास्कर एव।

**विद्—**तदो। (ततः)।

**मिलि—**तादृशे सम्भ्रमे कौमुदी चन्द्रशालामधिरुह्य वीक्षमाणा वीथीगतं वयस्यं रहस्समा-नीय सखीमुखेन व्रतावशेषपरिपूर्तिपर्यन्तमत्र न केनाऽपि जनेन सखीं विना समागम्यतामिति निदेशं दिशन्ती दौवारिकेभ्यः स्वैरं विहरति स्म प्रियतमेन।

**कासा—**अहो समापन्नमनर्थमूलम्। भद्र तदीयं लपितं किमङ्गीचक्रुः तत्र कलभादयः।

**विद्—**सव्वेपि कोमुईसमाराहिअदेवआभीइं पत्ता खु। कुदो न अंगीकरिस्संदि ताए वअणं। (सर्वेऽपि कौमुदीसमाराधितदेवताभीतिं प्राप्ताः खलु। कुतो नाङ्गीकरिष्यन्ति तस्या वचनम्)।

**कासा—**ततः किमासीत्?

**विद्—**अहं कहेमि। (अहं कथयामि)। (संस्कृतमाश्रित्य)

परस्परगुणोत्करश्रवणदर्शनोद्यन्मनो-
भवव्यथितचित्तयोस्तरुणयोः कचिदैवतः।
समागममुपेयुषो रहसि कृत्यमुत्कण्ठया
यदत्र सुतरां भवेत्तदितरत्किमस्त्येतयोः ॥

**कासा—**(विहस्य)। भद्र! ततः?

**मिलि—**अथ सीमन्तिनी सा कान्तमुखान्मामवगम्य बहिस्सञ्चरन्तं कयापि सख्या स्वशुद्धान्तं नीतवती सिद्धात्ममनोरथा।

विदू—सा ताए सही तुमं णीदवदी तुइ सरिसी एव्व भवे। सा तस्याः सखी त्वान्नीतवती तव सदृश्येव भवेत् ?

कासा—( विहस्य ) ततः ?

मिलि—निगूढं तया गमितोऽहं अपश्यं तत्र वश्यं कौमुदीहात्रस्य वयस्यम्।

विदू—केरिसो दिट्ठो सो ! ( कीदृशो दृष्टस्सः ? ) ।

मिलि— दीव्यन्नभिप्रेयसि काञ्चनाक्षान् तदीयस्वान्तमिलत्स्वचेलः।
कस्तूरिकापङ्कविमिश्रहृद्यकाश्मीरसंलिप्तसुगन्धिवक्षाः ॥

कासा—ततः ?

मिलि—सा मतिमती सुदती व्रताङ्गीभूतपूजाव्याजेन समानयन्ती समस्तं भोग्यवस्तुजातमतर्पयत् कन्दर्पदर्पहरणचणवपुषं कान्तम्।

विदू—पुव्वं एतस्स भइणीपडिमं आराहिअ तस्स फळं ळद्धवई अज्ज इमस्स आराहणं एव्व। ( पूर्वं एतस्य भगिनीप्रतिमामाराध्य तस्य फलं लब्धवती अद्यस्याराधनमेव।

कासा—ततः।

मिलि—ततोऽहं विधृतसैरन्ध्रीवेषः निशान्तं तदध्यवात्सम्।

विदू—तुह समाराहणस्स कोमुईसही केवळं तुमं पुरिसं मुणंती भवे। ( तव समाराधनस्य कौमुदीसखी केवलं त्वां पुरुषं जानती भवेत् ) ।

कासा—ततः ?

मिलि—अनन्तरम्।

स्वल्पावशिष्टं व्रतकालमस्या ज्ञात्वा दुराशः कलभः स कामी।
सज्जीचकारातिकुतूहलेन समस्तवस्तूनि विवाहहेतोः ॥

उत्तानितध्वजमुदञ्चिततोरणश्रीनिर्मृष्टसौधतलनिर्जितचन्द्रशोभम्।
देशान्तरागमितराजकदम्बरम्यं तत्पत्तनं पटहनादविघुष्टमासीत् ॥

कासा—अहो प्रमादनिदानम्। ततः ?

मिलि—तदनु वयस्यो विज्ञाय प्रज्ञावान् कलभप्रवृत्तिं सह सम्मन्त्र्य कान्तया तया यातया कातरतां त्रियामायां निगूढं निर्गत्य गन्तव्यं स्वपुरमिति निरचैषीत्।

कासा—ततः ।

मिलि— तथा निशीथे नितरां निशान्तान्निर्गत्य शीघ्रं निभृतं कथञ्चित् ।
रथ्यामयासीन्नितिग्ग्रिडां सशस्त्रैः —

कासा—हा! ततः?

मिलि— आरक्षकैः पुष्करसोदराक्ष्या ॥

विदू—तदो । (ततः ?) ।

मिलि—हन्त ते निरुध्य तं कुद्धाश्शुद्धान्नादवहृत्य पक्ष्मलोचनामेष चोरवन्निर्यातीति द्रुतं विद्रुताः केचिन्निवेदयामासुर्मतिमपुत्राय ।

कासा—ततः ।

मिलि— गर्जन् जवादूर्जितकोपभीमः पीनायताग्रोज्ज्वलकुन्तदन्तः ।
सहानुगैस्साहसकृत्यकारी वयस्यमादौ कलभो न्यरौत्सीत् ॥

कासा—हा वत्स! तथा भीषणान् कलभादीन् रोषणान् वीक्ष्य कोमलवपुस्त्वं कीदृगासीः । भद्र! ततः ।

मिलि—तदानीम्

शस्त्रं कुतश्चित्प्रसभं गृहीत्वा स युध्यमानो बहुभिर्वयस्यः ।
निपात्य कांश्चिद्दयितामधिन्वीद्रसेन वीरेण च वीरमौलिः ॥

विदू—मह वअस्स कुमारो खु, महासूरस्स । (मम वयस्य कुमारः खलु, महाशूरस्सः) ।

कासा—(विहस्य) सखे! भवान् कुत्र विषये महाशूरः ?

विदू—भोअणे मह सोरिअं विदअं खु । (भोजने मम शौर्यं विदितं खलु) ।

मिलि—(विहस्य) ततो हतेषु योधेषु बहुषु नवनवमागतैर्नियुध्य परिश्रान्तोऽभूत्सखा ।

कासा—हन्त दुराशयास्ते नीतिं विसृज्य प्रवृत्ताः खलु कलहे कलभादयः । ततः ।

मिलि— परिश्रान्तभुजं वीरं प्रतियुध्य खलाग्रणीः ।
कलभः स्वयमाक्रम्य क्लान्तं हन्तुं समुद्यतः ॥

कासा—वत्स! कालमेतावन्तं कलहमुखमप्राप्तवानपि प्रकाश्य शौर्यमनल्पं कालमिव प्रतिभयं कलभमभिमुखं विलोक्य कीदृशीं दशामापन्नोसि ? भद्र! ततः ।

मिलि— कलभः केशहस्ते तं गृहीत्वा क्रोधभीषणः ।
निबध्य हस्तयोः स्तम्भे निहन्तुं खड्गमग्रहीत् ॥

कासा—वत्स !

तथाविधां दैववशाद्दशां तां प्रपद्य पश्यन्नमहो दिशान्तम् ।
स्वरक्षकं कञ्चिदवाप्तुकामं त्वां चिन्तयन्नद्य शुचाऽन्वितोऽस्मि ॥

मिलि—भद्र ! ततः ।

तदात्वे सरभसं हिमानी नाम कापालिकी समुपेत्य कलभं न्यरुन्ध हन्त सद्यः संहारात् ।

विदू—दिट्ठीए समाअदा हिमाणी । ( दिष्ट्या समागता हिमानी ) ।

कासा—सखे ! किं प्रलपसि त्वमनालोच्य किमपि । सा पापा हिमानी प्रतिकूला किलास्माकम् । अत एव सद्यस्संहारादिति उक्तं मिलिन्देन । भद्र ! ततः ।

मिलि—तदा कौमुदी व्यलापीदेवम् ।

कासा—हा ! परुषमपि श्रवसोः तस्या विलापं शुश्रूषते चेतः ।

मिलि— हा ! नाथ ! त्वं सुकृतिजनताग्रेसरस्त्वाचिरायु-
र्भूत्वाऽपीह प्रबलदुरिताभल्पपुण्यामवाप्य ।
मां क्षीणायुर्भवसि भवतो विप्रयोगः कथं मे
सद्यो मद्यामहह गरलं भक्षयन्ती म्रियेऽहम् ॥ इति ।

विदू—जुत्तं उत्तम् । ( युक्तमुक्तम्) ।

कासा—सखे ! एतादृशो विलापः श्रुतो यदि कलभेन, महान्तं रोषं तस्य जनयेत्खलु ।

विदू—सो रुट्ठो जदि सीसं घट्टेदु सिळाए । ( स रुष्टो यदि शीर्षं घट्टयतु शिलायाम् ) ।

कासा—भद्र ! ततः किं कृतवती हिमानी ।

मिलि—पादयोर्निपत्य कलभमेवमयाचिष्ट ।

उपास्यते भद्र चिराय भद्रकाली मया मन्त्रजपेन देवी ।
तस्यै जपान्ते बलिरर्पणीयः सत्यं युवभ्यामतिसुन्दराभ्याम् ॥

तत्र कापि तरुणी मया निर्दिष्टा । तदर्थं मह्यमेष दातव्य इति ।

**कासा**—हा वत्स !

**चिरात्प्रवर्धितं प्रीत्या मया त्वां हन्त याचते ।**
**कापि कापालकी पापा कालीसन्तृप्तये बलिम् ॥**

( इति मूर्च्छति ) ।

**विदू**—वअस्स समस्ससिहि । सेसं सुणुमो । ( वयस्य समाश्वसिहि । शेषं शृणुमः ) ।

**कासा**—( आश्वस्य ) । भद्र ! ततः ।

**मिलि**—कति दिनान्यवशिष्टानि जपावसानकरणायेति हिमानीमप्राक्षीत् ।

**विदू**—किं सा पावा कहिदवदी । ( किं सा पापा कथितवती ) ।

**मिलि**—त्रिचतुराणि वासराण्येवावशिष्यन्ते । अनुपदं भाविभौमवारावधि कचिन्निबध्य रक्षितव्योऽयमस्त्विति ।

**कासा**—हा ! तदु दिष्टं कुजवासरमेतदेव खलु ?

**विदू**—ततो । ( ततः ) ।

**मिलि**—तत्क्षणं शृङ्खलया निबध्य खलया याच्यमानः कलभः सखायं न्यवीविशत्कचिदनितरसुगमे प्रदेशे ।

**कासा**—हा वत्स !

**निगलनिबद्धाङ्घ्रियुगं नितरां क्लान्ताननाम्बुजन्मरुचिम् ।**
**कान्ताशोकनिदानं त्वां तं सञ्चिन्त्य सीदति स्वान्तम् ॥**

**मिलि**—तदानीमपि सखा मम न म्लानवदनः; किञ्चिन्निमीलितनयनः कृताञ्जलिः स्वदेवतामेव ध्यायति स्म ।

**कासा**—भद्र ! तस्य स्वदेवता सा ध्रुवं मङ्गलदेवता खलु ।

**मिलि**—न केवलं भगवती सा स्वदेवता तस्य । अपितु कपिकुलाग्रणीः समीरणतनुजोऽपि ।

**कासा**—यदि वत्सो भगवतीं भार्गवीं तद्रमणचरणध्यानपरं पवनकुमारमपि तदा स्मरेदसंशयं सर्वविपदर्णवोत्तीर्णो भवेत् । उक्तं हि—

**कारागारे प्रयाणे वा सङ्ग्रामे देशविप्लवे ।**
**ये स्मरन्ति हनूमन्तं तेषां नास्ति विपत्तदा ॥ इति ।**

विदू—( स्वगतम् ) वअस्सस्स सोअसंतीए एवं हासजणअं वअणं भणेमि । ( वयस्यस्य शोकशान्त्यै एवं हासजनकं वचनं भणामि ) । ( प्रकाशम् ) सच्चं एदं मए अणुहूदं पुव्वं रहस्सत्थळे । मह गोत्तक्खळणेन कोवं पत्ता घरिणी अण्णं रज्जुं अळहन्ती दीहतरेण णिअथणजुअळेग मं बद्धवदी । तदाणिं मए सुमरिदे हणुमंदे सज्जो बन्धमोक्खो आसि । ( सत्यमेतत् । मया अनुभूतपूर्वं रहस्यस्थले । मम गोत्रस्खलनेन कोपं प्राप्ता गृहिणी अन्यां रज्जुमलभमाना दीर्घतरेण निजस्तनयुगलेन मां बद्धवती । तदा स्मृते हनूमति सद्यो बन्धमोक्ष आसीत् ) ।

कासा—( विहस्य ) किमपि भद्र !

पद्मिनीं भास्करेणेव सङ्गतां द्योतितां यथा ।
तथाऽहं कौमुदीसंगशोभितं तं न दृष्टवान् ॥

ततः किमाचरितवती भद्रा कौमुदी ?

मिलि—ततः सा हिमानीमुपसृत्य वाचमेवं वदति स्म ।

विदू—कहम् ? ( कथम् ) ।

मिलि—' अम्ब ! हिमानि, भद्रकालीतृप्तये निर्दिष्टां युवतीं परित्यज्य मामेतत्पदे निधे ' हीति ।

कासा—हन्त ! वत्से प्रणयो निरतिशयः कौमुद्याः । ततः ।

मिलि—अथ पाषण्डा सा रण्डा तन्नाङ्गीचकार ।

विदू—किं पच्चुत्तरं दिण्णम् ? ( किं प्रत्युत्तरं दत्तम् ? ) ।

मिलि—' अयि ! निर्दिष्टां परित्यज्य भवत्यास्समर्पणं देवी नोरीकरिष्य ' तीति ।

कासा—ततः । कलभः कीदृशः ।

मिलि— स्वकृते चिरमानीता रक्षितेयं हि कौमुदी ।
कान्तं कामयते कञ्चिदिति तस्यै चुकोप सः ॥

विदू—हदओ कळहो कळहप्पियो कोमुइं कामअन्तो चिळादो ताए मणं अण्णपुरिससत्तं मुणन्तो कुदो जीवइ । ( हतकः कलभः कलहप्रियः कौमुदीं कामयमानश्चिरात् तस्याः मनः अन्यपुरुषसक्तं जानन् कुतो जीवति ? ) ।

कासा—किमकार्षीत् मत्तः कळभः ?

**मिलि**—तामपि निगलितबद्धपदां बन्दीकृतवान् ।

**कासा**— वत्से! वत्से! मम कु[illegible]हसुक्लिमचित्तां
तां त्वां बद्धौ कळभहतकेनाद्य ते वल्लभश्च ।
मोक्तुं भद्रे त्वरितमपटोर्मानसं मे समेति
व्रीलां शोकं विपुलमधिकां दीनताञ्चानुकम्पाम् ॥

अधिका मम पुत्र्यास्त्वमधुना वधु नाऽसि किम्?
यतस्त्वन्मूलमेव स्यात् सन्ततेर्मे प्रवर्धनम् ॥

भवेत्समुल्लासकरो यदीह विकासशोभी कुमुदाकरो मे ।
त्वमेव तं कर्तुमलं विलासभाजं कथं त्वां विषहे विदूनाम् ॥

**विदू**—वअस्स! तुह अदिभूमिं गओ ण्हुसाए सिणेहो । (वयस्य! तवातिभूमिं गतः स्नुषायां स्नेहः ) ।

**कासा**—सखे!

तनुजः सुकृतेन यावता सुगुणाढ्यो भुवि लभ्यते जनैः ।
तत एव शताधिकेन हि प्रतिलभ्या भवति स्नुषा सती ॥

**विदू**—मह सुइदेण कापि वहू ळद्धा सुहगुणा । जा अदिभोअणेण मह अदिसाररोओ भवेत्ति संकाए मिदं एव्व भोअणं विदरइ । दन्तहीणत्तणेण भक्खणं ण खादिस्समित्ति किंवि भक्खणं ण समप्पेइ । इत्थियाभोगेण उह्णपीडा भवेत्ति संकाए मह घरिणीए ममस्सिं विरोहं उप्पादेइ । (मम सुकृतेन कापि वधूर्लब्धा शुभगुणा । या अतिभोजनेन मम अतिसाररोगो भवेदिति शङ्कया मितमेव भोजनं वितरति । दन्तहीनत्वेन भक्षणं न खादिष्यामीति किमपि भक्षणं न समर्पयति । स्त्रीभोगेन उष्णपीडा भवेदिति शङ्कया मम गृहिण्या मयि विरोधमुत्पादयति ) ।

**कासा**—सखे! अलं विस्तरेण ।

मृत्योर्मुखे वर्तत एव वत्सः स्नुषा तु तत्प्राणनमात्रजीवा ।
कालोऽप्यतीतः सह सेनया मे याने विजेतुं किमहं करोमि ॥

**विदू**—वअस्स! तुह जामादा बुद्धिसाळी खु । भूमिघरगदं तं आणीअ मंदइदव्वं । (वयस्य! तव जामाता बुद्धिशाली खलु । भूमिगृहगतं तमानीय मन्त्रयितव्यम् ) ।

कासा—युक्तमुक्तं भवता। यतोऽद्य जीमूतनाशात् तस्य जायया समं बहिर्निर्गमनं न दोषमावहति। भद्र! भवानेव भ्रमरिकामुखेन भूमिसदनवास्तव्यं भद्रभास्करं भद्रां पद्मिनीञ्च समानयतु।

मिलि—यथाऽऽज्ञापयति महाराजः। (इति निष्क्रान्तः)

कासा—सखे! शुद्धान्तं गत्वा किञ्चिद्विश्रमं प्राप्स्यामि।

विदू—जहा रोअइ सहिणो। (यथा रोचते सख्युः)।

(इति निष्क्रान्तौ)

इति पद्मिनीपरिणये अष्टमोऽङ्कः॥

## ॥ अथ नवमोऽङ्कः ॥

( नेपथ्ये )

अलं सायंकालप्रतिनियतवादित्रनिनदै-
रलं नृत्तैर्गीतैरलमलमलं वन्दिनुतिभिः ।
यतः पुत्रोदन्तं नृपतिरवकर्ण्याद्य नितरां
विदूनः पुत्रीं स्वां पुनरपहृतां ज्ञास्यति तथा ॥

( इति चूलिका )

( ततः प्रविशति भ्रमरिकया च अरुणेन च अनुगम्यमानो भास्करः )

भास्क—सखे ! किमेतदापन्नमतर्कितं व्यलीकम् ?

अरुणः—(स्वगतम्) हा ! कथं समाधातुं शक्यो वयस्यः महत्यामस्यां विपत्तौ ! ( प्रकाशम् ) किं ब्रवीमि मन्दभाग्यः ।

भ्रम—हळा ! कहिं गदासि ? ( हळा ! क गताऽसि ? )

अरु—अलमावेगेन । निशान्तं प्राप्य सुशान्तं नृपं पश्यामः । ( इति परिक्रामन्ति )

अरु—( पुरोऽवलोक्य )

विदितसुतदशोऽयं काममार्तान्तरङ्गः
सविधगतजनास्ये केवलं दत्तचक्षुः ।
कथमिव तनुजायास्तामवस्थामसह्यां
मृदुतरमनसाऽग्रे बोधनीयो जनेन ॥

भास्करः— शुद्धान्तचारिजनमात्रपरीतपार्श्वो
गण्डस्थलीनिहितसंश्लथवामपाणिः ।
निःश्वाससन्ततिभृताधरशोणशोभः
पूज्यो विचारजलधौ विनिमग्नचित्तः ॥

( प्रविशति यथानिर्दिष्टः कासारः )

कासारः— आनुकूल्ये प्रवृत्तोऽपि विधिर्विद्वेषिसम्भृतेः ।
अचिरात्प्रातिकूल्ये मे समुद्युक्त इवाधुना ॥

भ्रम—हळा! कुदो ण लक्खीअसि। (हळा! कुतो न लक्ष्यसे)।

कासा—अन्यदप्यत्याहितं श्रूयते।

भास्क—हन्त! दैवदुर्विलसितम्।

कासा—अरुण! किमापन्नम्?

अरु—(तूष्णीं वर्तते)

भास्क—किं गोपनेन?

अरु—उद्विजते वक्तुं जिह्वा।

कासा— प्रतिकर्तुमशक्यं वा शक्यं वा सुहृदा स्वयम्।
अनिष्टमपि सञ्जातमभिधातव्यमेव हि॥

अरु— अहो! श्रुत्वा यावत्तव शुभनिदेशं सह मुदा
वयं भूमीगेहाद्बहिरिह विनिर्यातुमनसः।
उदस्याम प्रीत्या पतिमनुगता ते तनुभवा
भियाऽत्यक्षत् भो! मामुपसरति भूतं महदिति॥

कासा—कष्टम्! ततः।

अरु—यावदावां परावृत्य पश्यामः तावद्दृष्टा जलधरे सौदामनीव अन्तर्हिता।

कासा—किं करिष्यामि सखे! पापा हिमानी गिरंध्ये यां तरुणीं निर्दिष्टवती सा वत्सैव न संशयः।

वत्सौ सुन्दरवपुषौ सद्गुणपूर्णौ चिरेण संलब्धौ।
कीरौ यथा बिडाली कालीतृप्त्यौ हनिष्यति हिमानी॥

(इति पतति)

विदू—(उत्थाप्य) वअस्स! समस्ससिहि (वयस्य समाश्वसिहि)।

कासा— स्मरामि वां शैशवमद्य वत्सौ लालाम्बुमुक्ताफलमुग्धसृक्कम्।
द्विवैर्नवीनैर्दशनैर्मनोज्ञवक्त्राब्जमस्पष्टवचोभिरामम्॥

भास्क— हा तादृशीह दयिते पुरतः स्थितेव
त्वं भासि मे तुहिनमण्डलभीतिभारात्।

वेगेन धावितुमना अपि मन्दमर्दं
तादृङ्नितम्बकुचकुम्भभरेण याता ॥

भ्रम—हा सहि ! कहिं गदासि मं उज्झिअ ? तुह दस्सणं विणा मे खणो वि जुअसरिसो खु। (हा सखि! क गताऽसि मामुज्झित्वा। तव दर्शनं विना मे क्षणोऽपि युगसदृशः खलु)

कासा— वत्से विहारसमयेषु वराटिकाभि-
गलीः प्रतार्य वचसा ग्लहमाददानाम् ।
त्वां वा स्मरामि तव सोदरमद्य जित्वा
क्रीडासखानहह तद्भुजवाहनं वा ॥

भ्रम—हळा! तस्सिं कीळासमए अह्माणं मिहो खणेखणे कळहो सिणेहो वा भवे खु। (तस्मिन्क्रीडासमये आवयोः मिथः क्षणेक्षणे कलहः स्नेहो वा भवेत्खलु)।

भास्क—प्रिये!

हा त्वं मुरारिदयितां हृदि भावयन्ती
हस्ताञ्जलिस्थकुसुमा दरमीलिताक्षी ।
ईषच्चलत्किसलयच्छविदन्तचेला
दृष्टाऽद्य तां कथमहो इह विस्मरामि ॥

कासा— वत्सौ विदित्वाऽपि वशं गतौ तौ मृत्योः कथं चित्त मदीय पाप ।
न दीर्यसे हन्त तवेह सृष्टिर्लोहेन वा किं पविना न जाने ॥
(इति मूर्च्छति।)

भ्रम—(वीजयित्वा) हद्धि! कुदो सअळलोअसन्तावहरो सहीतादो ण उच्छसिइ। (हा धिक्! कुतस्सकललोकसन्तापहरः सखीतातो नोच्छ्वसिति)। (इति रोदिति)

भास्क—सखे!

भ्रात्रादिमप्रियसुहृज्जननिर्विशेषं
तातस्य चात्र तनुते सुखमात्मजाता ।
तस्याः कृतेऽयमिह मूर्छति चेदनन्य-
लभ्यं सुखं तदनुभूय भवामि कीदृक् ॥
(इति पतति)

अरु—(उत्थाप्य) वयस्य ! धैर्यं गृहाण ।

भास्क— सा मां ध्रुवं स्वहृदये दधती म्रियेत
तामेवचेतसि दृढं कलयन्म्रियेऽहम् ।
आवां परत्र मिलितौ सुखिनौ भवाव
यं भावमेति वपुषश्च्यवने स हि स्यात् ॥

(इति मूर्छति)

अरु—(वीजयन्) हा नोन्मीलयति चक्षुः । प्राणहानोद्यत एवायं सखा ।

आपांसुकेलिसमयात्स्वमपांसुलाध्व-
चारिन् ! सखेऽनुचरमत्र विहाय मां द्राक् ।
कैश्चिद्दिनैः परिचितां विदतः प्रियां तां
किं ते विधातुमुचिता परलोकयात्रा ॥

(इति पतति)

भ्रम—(उभावपि जलेन निषिच्य) समस्ससिहि । (समाश्वसिहि)।

भास्क—(उन्मील्य) हन्त ! मूर्च्छितः सखा !

सखे ममोदयो नित्यं त्वां पुरस्कृत्य जायते ।
तादृशो मां कथं त्यक्त्वा परलोकं विगाहसे ॥

(उत्थापयति)

अरु—(भास्करं वीक्ष्य) वयस्य !

त्वद्विपत्तिदशां द्रष्टुमक्षमेण मयाऽधुना ।
मर्तुं व्यवसितं शीघ्रं किमर्थं मामबोधयः ॥

कासा—हा वत्से !

त्वं जातमात्रा यदि लोकमन्यं तदा प्रविष्टा तव दुःखमेव ।
मां तापयेदद्य तु भास्करस्य सम्बन्धहानिर्दहतीह चेतः ॥

अरु—(स्व) युक्तमेतत् । (प्र) भास्करसम्बन्धं विना कासारस्य नास्ति हि सौगन्ध्यम् ।

भास्क—सखे !

प्रियाविश्लेषशोकाग्नौ दहत्यापादमस्तकम् ।
क्षिपतीव पिता तस्याः स्वविलापमयेन्धनम् ॥

कथञ्चिदहमाप्स्यामि पद्मिनीमिव वल्लभाम् ।
कासारसदृशो जातु श्वशुरो न भविष्यति ॥

अरु—सखे ! यदि भवता भूयः पद्मिनीसदृशी सुदती लभ्येत, कासारसदृशः श्वशुरश्च भवेदसंशयम् ।

भास्क—साधु साधु ! तव वचनम् ।

पद्मिनीसदृशी कान्ता भास्करस्य न जातुचित् ।
कासारसदृशः पूज्यस्तथैव न भविष्यति ॥

यस्याः कटाक्षलहरीव मधुव्रतालि-
र्यस्याः कचावलिरिवाभिनवाम्बुनीली (?) ।
यस्यास्तथा मुखमिवाम्बुरुहं विकासि
तस्या भुवीह सदृशी सुलभा क्व वा स्यात् ॥

यस्याः कुचाविव विभाति रथाङ्गयुग्मं
यस्या गतीरनुकरोति मरालयोषा ।
यस्यां निवासमयते कुतुकेन लक्ष्मी-
स्तस्या विना विलसितं मम जन्म कीदृक् ॥

भ्रम—हळा जह्वा तुमं अविआसिमुहपदुमा होसि तदा अह्माणं सहचरीणं दुःसहो खु किळेसो । (यदा त्वमविकासिमुखपद्मा भवसि तदास्माकं सहचरीणां दुस्सहः खलु क्लेशः ।

भास्क—भद्रे ! कथं सहेथास्तस्याः पद्मिन्या विरहम् । यस्यास्त्वं माध्वीभिरिव मधुराभिरुक्तिभिरानन्दितासि ।

अरु—भद्रे ! समाश्वसिहि ।

भास्क— पिहितमिव मनो मे शोकदावाग्निनाऽयं
कवलित इव देहः क्ष्वेलतापेन सर्वः ।

प्रमुषित इव माहेन्द्रियग्राम्य वर्गः
प्रशमित इव धर्मश्चेतनायास्समस्तः ॥

भ्रमरिके ! धारय माम् मम प्रेयसीतनुलताभिमर्शजातमहिमभ्यां तव पाणिभ्याम् ।

भ्रम—हा ! सुमरेमि सहीए फरिससुहम् । (हा ! स्मरामि सख्याः स्पर्शसुखम्) । (इति धारयति भास्करम्)

कासा— तनयो विभाति तव पद्मिनीं प्रियां
नृपते प्रपद्य स मुदेति योगिनः ।
वचनं निशम्य कुतुकादिहागत-
स्तनयागुरुः स कथमीक्ष्यतां मया ॥

ततस्तदागमात्पूर्वमेव प्रविश्य वैश्वानरं शमयामि शोकपावकम् । कोऽत्र भोः !

(प्रविश्य)

कञ्चुकी—एसोह्मि । (एषोऽस्मि) ।

कासा—उच्यतां सचिवोऽनुकूलोऽस्माकं सर्वोऽयमुर्वीभरस्त्वयैव धार्यताम् । वयमधुना जातनिर्वेदा जातवेदसं प्रविशाम इति ।

कञ्चु—(सास्रं निष्क्रान्तः)

कासा— अवरोधमहं प्राप्य नवपुत्रीवियोगतः ।
अपुनर्दर्शनां यात्रां बोधयामि कुटुम्बिनीः ॥

(इति निष्क्रान्तः)

भास्क—सखे ! क्व गतस्य मे भवेच्छान्तिः ?

अरु—याव: प्रमदोद्यानम् । (उभौ परिक्रामतः)

भास्क—सखे ! निखिलव्यथापनोदकारिण्यामपि ममारामभूमावस्यां वर्धते शातोदरीविरहव्यथा । तथा हि—

चेतोहराणि कुसुमानि मनोभवस्य
भूत्वा शरास्तरुषु यद्यपि सङ्गतानि ।
भिन्दन्ति चित्तमिव मे बत संप्रयुक्ता
वीरेण तेन जगदेकधनुर्धरेण ॥

यदिह जलरुहं मां दृष्टमात्रं प्रियाया
वदनमतिमनोज्ञं स्मारयद् द्रागधिन्वीत् ।
अहह तदपि बाणीभूय तस्मिन् क्षणेन
स्मरधनुषि मनो मे विध्यतीव क्व यामि ॥

अरु—वयस्य ! विपन्निकष एव परीक्ष्यते पुरुषस्य धैर्यतपनीयोत्कर्षः ।

भास्क— अत्यन्तभीषणतमःक्षितिभृत्क्षणेन
यत्तेजसि स्फुरति धावति दृष्टिमार्गात् ।
यस्याशनिप्रतिभयादपि भीर्न मेघात्
तं मां च कातरमहो नुते स्मरास्त्रम् ॥

हा सखे !

रम्यं वस्त्वपि लोचने स्फुरति मे कल्पान्तकालोपमं
श्राव्या अप्यतिचारवोऽत्र हि रवाः कर्णे गराणीव मे ।
धाता यन्मुकुमारमस्त्विदमिति प्रीत्या स्वयं निर्मितं
तन्मवे विरहेऽन्यथा विदधतं किं ब्रूमहे मन्मथम् ॥

अन्तर्हितो मे दयितां विनाश्य तां पद्मिनीं क्वाद्य सखे मदान्धः ।
स कालगन्धद्विरदो वद त्वं भिनद्मि कुम्भं स्वकरेण तस्य ॥

(इति धावति ।)

अरु—हा ! वयस्योऽयमुन्मादं प्रापितः स्मरेण (इति निवारयति) ।

भास्क—मुञ्च सखे ।

अरु—संस्तभ्यतां हृदयम् ।

भास्क— आशाः प्रसाधयतु नैकविधा बुधानां
कृत्वा तमोहतिमयं वसुमश्चयो मे ।
यो मीलनं स्वयमरुन्ध न मत्प्रियायाः
श्रीनित्यधामवसतेरधुना धिगेनम् ॥

सखे ! पश्य पश्य ।

आयाति गच्छति निषीदति तत्क्षणेन
प्रोत्थाय तिष्ठति दिशो दश सम्भृतास्त्रम् ।

संवीक्षते न बिसमत्ति पिबत्यपो नो
हंसः स्वपोषणरतां दयितामपश्यन् ॥

(इति मोहं गतः)

अरु— दशवदनहृतायां मैथिलस्यात्मजायां
दशरथनृपपुत्रो भामवस्थामवाप ।
अनुभवति सखा मे तामर्थं किं विधेयं
पुनरिह तु सुमित्रापत्यभावं श्रयामि ॥

(इति भास्करमवलम्बते)

भास्क— (ससम्भ्रमं दिशो वीक्ष्य) सखे! दृश्यते सर्वतः प्रेयसी ।

क्रीडन्ती सा क्वचन तरुणी कन्दुकैर्दृक्पथे मे
पुष्पं हस्ते क्वचन दधती लक्ष्यतेऽलङ्करिष्णुः ।
अन्यत्रैषा मम करतलान्नागवल्लीं गृहीत्वा
वक्त्रे हर्षादिह धृतवती मन्मुखे तन्वतीयम् ॥

वयस्य! कथमियमिदानीं क्वापि न दृश्यते । कश्चिदेनां गृहीत्वा जलदरूपेण विद्युतमिव नयति वियति । तदहं तमनुगम्य निवर्तयामि । (इत्युत्प्लवते)

अरु—सखे! किमुन्मत्तभूतोऽसि?

भास्क—आः! ज्ञातम् । वर्तते पद्मिनी भूसद्मनि । अद्य स्वस्थोऽसि । किमपि पृच्छामि कस्त्वम्? कुत आयासि? अपि त्वया दृष्टपूर्वा पद्मिनी?

अरु—किं प्रलपसि?

भास्क—आः, सखा खलु भवान् । सखे पिङ्गल! क्व मे सखा अरुणः?

अरु—अहमेवारुणः ।

भास्क—पिङ्गलः कुत्र?

अरु—पर्यवस्थापयात्मानम् ।

भास्क—किं प्रलपामि?

अरु—तथा ।

भास्क—कुतः ?

अरु—पद्मिनीविरहात् ।

भास्क—पद्मिनी कुतः ?

अरु—न ज्ञायते ।

भास्क— कुसुमशर नमस्ते तिग्मबाणप्रयोगा-
द्विरम परभृत त्वां नौमि मौनं भजस्व ।
मलयपवन दूरे याहि भद्रं तव स्या-
द्भवति हि भुवि पुण्यं दीनसंरक्षणेन ॥

अरु—सखे ! निषीद प्रच्छायशीतले बकुलपादपतले ।

भास्क—( निषीदन् ) सखे ! नान्यत्र गता तव सखी ।

शुशुत्सया मत्प्रणयस्य मन्ये कयाऽपि शक्त्या मम चित्तमेव ।
प्रविश्य लीना ह्यथवा तदेतन्न युज्यते तापमिदं यदेति ॥

अरु—मा विलापीः । भगवान् शारदानन्दो यदत्र प्रतिकर्तुं शक्नोति ।

भास्क—सखे ! मम तातपादानानेतुं गतो नितान्तगुणोऽसौ योगी यावदायाति तावन्न क वत्स्यावः ।

अरु—सखे ! तावदध्युषितपूर्वं प्रमदावनप्रासादमध्यास्वहे ।

( इति निष्क्रान्तौ )

इति पद्मिनीपरिणये नवमोऽङ्कः ॥

## ॥ अथ दशमोऽङ्कः ॥

( ततः प्रविशति सकाशस्तम्बश्शारदानन्दः ) ।

शार—वत्स ! किं ब्रूमः भास्करकरस्पर्शस्फुटितपद्मलब्धस्य मणेर्महिमानम् ।

धृतेऽस्मिन् नश्यति तमः प्रसीदति मनः स्वयम् ।
अपरोक्षञ्च विज्ञानं जायते वर्धते धृतिः ॥

काश—स्वामिन्! कुतो मध्येमार्गमनुयायिनं नदयधरं विहाय योगमहिम्ना मामपि नयन् कासारसमीपमागतोऽसि ।

शार—वत्स ! पथि प्रसक्तया स्मृतः कासारः । करस्थितमणिमहिम्ना साक्षाद्दृष्टः शोकवशाद्वैश्वनरं प्रविशन् । तत्सत्वरं समापृच्छ्य नमुदयधरमागतोऽस्मि । पश्य ।

कासार एष कष्टं सोढुमशक्तस्तनूजयोर्विरहम् ।
सप्तार्चिषं प्रवेष्टुं सानिद्धिरिद्धं प्रदक्षिणीकुरुते ॥

काश—आर्य ! निवार्यतां शीघ्रम् ।

शार—( द्रुतं निष्क्रम्य हस्ताकृष्टकासारः पुनः प्रविश्य ) राजन् ! अलमावेगेन ।

कासा—स्वामिन् ! न शक्ष्यामि सोढुमपत्यविश्लेषम् । तदनुगृह्यतां कृशानोरवगाहनाय ।

शार—आस्यताम् । तत्र यथाशक्यं प्रतिक्रियते ( इति तमासयन्नुपविशति ) ।

कासा—भगवन् ! किं जीवितेन मे ?

ज्ञातस्सुतो मृत्युमुखं प्रविष्टो वत्सागतिं वेद न वेदनां ताम् ।
सहे सहेमाभवपुस्सुतायाः प्रियः कथं शक्यमिहेक्षितुं मे ॥

शार—काशस्तम्ब! मणिमिमं कलयन् करेऽवहितस्संस्मर कासारात्मजाम् । (इति मणिं ददाति)

काश—( आदाय ) स्वामिन् ! दृश्यते पद्मिनी क्वचन विप्रकृष्टप्रदेशे ।

शार—स देशः कीदृशः ?

काश— संवीक्षे गहनं वनं पृथुनदीकूले शरारुव्रजै-
भीमं तत्र तु भैरवीगृहमदश्छन्नं पलालात्कैः ।

कासा—हा वत्से ! कथं वससि तत्र ?

शार—ततः ।

काश— पाषाणप्रतिमाऽस्ति तत्र कुसुमै रक्तैः कृतालङ्कृति-
दंष्ट्राऽत्युग्रमुखी करालनयना शूलं दधाना करे ॥

शार—ततः ।

काश—( सम्यगुन्मील्य ) परितः

इङ्गालतुल्यतनवः प्रसरत्स्फुलिङ्ग-
नेत्रा जपारुणकचा बहवः पिशाचाः ।
क्रव्याशया विपुलसृक्वविलोलजिह्वा
भीमानि सन्तरलयन्ति मुहुर्मुखानि ॥

कासा—वत्से !

या मन्दिरालिन्दमहीषु गन्तुं
रात्रावपट्वी हृदि कातरत्वात् ।
धात्रीकरालम्बनमिच्छसि स्म
धात्रीं कथं पश्यसि तामिहैका ॥

शार—ब्रूहि ! ततः ।

काश—तत्रास्ते कापि कापालिकी ।

शार—कीदृशी सा ?

काश— जटाभरं कुङ्कुमसन्निकाशं
सा बिभ्रती काकनिभं कपालम् ।
अस्थिस्रजश्चामलभस्मदिग्ध-
समस्तगात्री दहनोज्ज्वलाक्षी ॥

कासा—पापा सा किं कुरुते ?

काश— अजांस्तरुद्वन्द्वनिबद्धरज्जुप्रलम्बिनो दीनरवान् क्रमेण ।
कृपां विना सा कृपणान् कृपाणहस्ता निकृत्योपचिनोति मांसम् ॥

अपि च ।

कृकवाकुगणं पापा कूजन्तं हन्त सत्वरम् ।
विपक्षीकृत्य हस्ताभ्यां नखैः कृन्तति तत्क्षणम् ॥

दुर्दर्शा सा भूमिः ।

इतस्तत [illegible]धाराभारातिदारुणा ।
सृगालाकृष्यमाणास्थिसिराचर्मौघदन्तुरा ॥

पङ्क्त्या विन्यस्तमदिराकलशापातिमक्षिका ।
अग्निज्वालाज्वलच्चुल्लीं परितः पतदोदना ॥

कासा—( कर्णौ पिधाय ) अलमलम् ।

शार—कीदृशी पद्मिनी ?

काश— अरुणकुसुममालोद्बद्धकेशी कृशाङ्गी
तरुणतरणिभासा वाससा संवृताङ्गी ।
विवृतवदनभीमैरावृतान्ता पिशाचै-
र्वृकनिकरपरीता हा कुरङ्गीव भीता ॥

कासा—वत्से ! जानन्नपि तवेदृशीं दशां वर्तेऽहमितिकर्तव्यतामूढो मन्दभाग्यः ।

शार—ततः ।

काश—अद्य तत्र न दृश्यते कापालिकी !

कासा—वत्समानेतुं गता स्यात् ।

काश—तथैव । उभावपि दृश्येते ।

शार—कथम् ?

काश— निगलितचरणः स पृष्ठभागे दृढतरयोजितबद्धबाहुयुग्मः ।
करतलधृतखड्गया हिमान्या भवति पुराद्बहिराशु नीयमानः ॥

कासा— यदि मुक्तबन्धः स्याद्विक्रमेत वत्सः । को मोचयेत् ?

शार—( स्व ) भगवती पद्मालया ( प्र ) ततः ।

काश—भगिनीपार्श्वं नीतोऽसौ वध्यवेषं प्रापितः ।

कासा—किं ब्रुवाते परस्परम् ?

काश— पुत्रयोरावयोरेतां प्राप्तयोर्युगपद्दशाम् ।
पित्रोर्विजानतोरग्नौ पतनात् का परा गतिः ॥ इति वदतः ।

सालावनीरुहसुदीर्घभुजस्सुवर्ण-
मालां वहन्गलतले धवलाम्बरश्रीः ॥

शार—किं करोति रामकिङ्करोऽयम् ?

काश—प्रणमति भार्गवीम् ।

कासा—भगवतीं रमां हरिवीरं च विलोक्य वत्सौ किमाचरतः ?

काश—तौ तयोर्नयनगोचरतां न याताविति मन्ये ।

कासा—कीदृशी कापालिका ?

काश—उद्धृतखड्गा स्तब्धेव तिष्ठति ।

शार—(स्वगतम्) भगवत्या स्तम्भितभुजा स्यात्पाषण्डा । (प्रकाशम्) ततः !

काश—किमपि सल्पतो हरिवल्लभाप्लवङ्गमल्लौ ।

कासा—कथमिव ?

काश—तन्नावगम्यते ।

शार—ततस्ततः ।

काश—उभौ तिरोदधाते ।

कासा—हा ! कथमेतत् ।

(प्रविश्य पटाक्षेपेणारुणः)

हा ! कष्टम्

स्वपितरमवगम्यायान्तमानन्तुकामः
सविनयमुपगन्तुं यावदायात्सखा मे ।
सरभसमनुयातः केनचित्क्वापि निन्ये
किमहमभिदधामि च्छद्मरूपः स हर्ता ॥

कासा—कथमुपरतं जगद्भागधेयम् ? (इति मूर्च्छितः पतति) । (प्रविश्य दौवारिकः)
परिहारभूमिं गओ उदअधरो । (प्रतिहारभूमिं गत उदयधरः) ।

शार—प्रवेशय ।

दौवा—(निष्क्रम्य तेन सह प्रविश्य) इदो इदो । (इत इतः) ।

उद—कुतस्सर्वे म्लानवदनाः ?

शार—उपविश्यताम् ।

उद—( उपविश्य ) हा मूर्च्छितस्सम्बन्धी !

भुजङ्गमेन किं दष्टः किं पपौ गरलं स्वयम् ।
भीतोऽपवादात्कस्माच्चिद्धतो वा येन केनचित् ॥

शार—नैतत्सर्वम् ।

उद—( स्वगतम् ) किमन्यत्कारणम् ?

शार—( तीर्थेन प्रोक्ष्य ) समाश्वसिहि ।

कासा—( उत्थाय )

कापालिकाक्रवशं तनया गतेति
　　काल्यै बलिश्च भवितेति न मेऽद्य शोकः ।
जामातरि प्रथिततेजसि हन्त शान्ते
　　विश्वस्तया तनुजयाऽत्र किमस्ति सौख्यम् ॥

उद—( स्वगतम् ) कष्टं नष्टो मे सुतः प्रणङ्क्ष्यति स्नुषेति च ज्ञायते । (प्रकाशं) हा वत्स !

अस्त्राणि योगिनृपतेरधिगम्य भूय-
　　स्तेजस्विनं सुगुणदारसुशोभिपार्श्वम् ।
दृष्ट्वा भवन्तमधुना मुदमाप्तुकामः
　　प्राप्तोऽस्मि भद्र विधिना निहतो गतिः का ॥

तदहं प्रविशामि हुताशम् ।

कासा—ज्वलित एवानलः । तदावां प्रविशावः । ( इति उभौ वह्निमभिगच्छतः ) ।

शार—( निवार्य ) क्षणं सह्यताम् । ( इति तावासयति ) ।

उद—वत्स भास्कर !

भाग्येन केनापि कृतेन पूर्वं लभ्यः सुतः साधुगुणोपपन्नः ।
तस्यानुरूपा च वधूरनल्पैः पुण्यैर्विना स्यात्कथमत्र लभ्या ॥

इति चिन्तामहाम्भोधेरुत्तीर्णोऽपि कथञ्चन ।
अद्य मज्जामि शोकाब्धौ दुस्तरे विरहात्तयोः ॥

काश—अद्भुतमेतत् ।

शार—कथम् ।

काश— दग्धोऽपि यत्र जीमूतः पद्मिनीमहिमाग्निना ।
नाम्रन् जहाति दूरे तन्नगराद्भास्करः स्थितः ॥

शार—कीदृशः ।

काश— नीयमानः कपीन्द्रेण स्तूयमानः सुरैरपि ।
समुद्रेणेव परिखासलिलेन निरुध्यते ॥

उदयभरकाशारौ—उच्छ्वसतीव नौ जीवितम् ।

शार—ततः ।

काश— श्रियो महिम्ना निस्सीम्ना हरयः परदन्तिनाम् ।
सुहृदो भास्करस्याद्य साहाय्यं कर्तुमुद्यताः ॥

शार—किमाचरन्ति ते ?

तरुभिर्गिरिभिस्तत्र सेतुं कश्चिद् वितन्वते ।
स पादस्पर्शनाद्यातो भास्करस्य पवित्रताम् ॥

उद—ततः ।

काश— भास्करेण समाक्रान्ते कलभः स्वपदेऽधुना ।
सन्तप्तः शरणं याति हिमानीं वनवासिनीम् ॥

काशा—ततः ।

काश—सा तु प्रार्थयते भैरवीम् ।

सा भैरवी कश्चिदहिं स्वदेहादुत्पाद्य भीमं व्यसृजत्सकोपम् ।
ग्रस्तस्तदीयेन फणान्तरेण स भास्करोऽभूद्रहितप्रकाशः ॥

काशा—हा ! महाहिना ग्रस्ते भास्करे जगदिदं तमसावृतमास्ते । ततः ।

काश—केनापि निमित्तेन पत्युः विपदं जानती पद्मिनी विलपत्येवम् ।

उद—कथमिव ।

काश— दयित यदि तवाहं जीवतः स्यां परेता
सकलगुणनिधेः स्युः साधवो धर्मदाराः ।
भवति मम परेते हन्त वैधव्यदुःखं
निरवधि मरणान्तं स्यादिति स्पष्टमेव ॥

हिमानी मायया निर्माय भास्करशिर इव पातयति पद्मिन्या अग्रतः । भद्रा हिमानीं प्रति वदत्येवम् । "अयि कापालिके पातय मे कण्ठे खड्गलताम्, यथा मम भर्तुः कण्ठे कृतवत्यसि ।

कासा—युक्तमेव ।

उद—हा स्नुषे! किं ब्रवीमि तव सौजन्यम् ?

काश—पद्मिनी प्रार्थयते पद्मालयाम् । 'अम्ब मह्यं सौमङ्गल्यभिक्षां देही'ति । आश्चर्यम् ।

पक्षोद्भूतसमीरवेगधरणीप्रोद्यद्रजोव्यावृतं
कुर्वन्व्योमतलं चलक्षितिधरस्फूर्जत्तनुश्रीरसौ ।
तार्क्ष्यो राजति तत्क्षणं स भुजगो नष्टः प्रहृष्टाऽधुना

कासा—को वा देवो न प्रसीदति पद्माभक्तजनस्य ?

उदय—ततः ।

काश— ज्ञात्वा वल्लभमेतमस्तविपदं भव्यैर्निमित्तैः स्वयम् ॥

( सर्वे हर्षं नाटयन्ति ) ।

काश—भूयः प्रमादः ।

शार—कथम् ?

काश— अत्युग्रलोचनविनिर्गतकोपजाश्रु-
जम्बालितावनितलाः पवितीक्ष्णदंष्ट्राः ।
आक्रामन्ते पलभुजो भुजधार्यमाण-
भीमायुधाः सपदि भास्करमुग्रघोषाः ॥

शार—ततः ।

**काश**— लाङ्गूलान्तोज्ज्वलतरमणीकिङ्किणीशोभिघण्टा-
ध्वानेनासाविह मुखरयन् हन्त दिक्चक्रवालम् ।
गर्जन्नद्रिं लघु करतले धारयन् रत्नसानो-
र्बिभ्रत्कान्तिं लसति हनुमान् विक्रमं स्वं विवृण्वन् ॥

विक्रममाणे पवमानात्मजे पूर्वमशोकवनमिव भग्नैः पादपैस्समरतलं पलाशनैः पतितैर्दुर्गमं भवति ॥

**शार**—ततः ।

**काश**—पद्मिनीधर्माग्निना दग्धोऽपि जीमूतः भैरव्याप्यायित ओजायते ।

**कासा**—किमेतत् ?

**काश**— भास्करे तेजसां राशौ परितो गाः प्रवर्षति ।
प्राप्तवान् पातकी सद्यो जीमूतो नामशेषताम् ॥

**शार**— पतिव्रतानां माहात्म्यं को वा वर्णयितुं पटुः ।
पद्मिनीप्रतिमास्पर्शादपि पापो हतोऽभवत् ॥

**कासा**—स्वामिन् ! प्रभावो भास्करस्य खलु तादृशः ।

**शार**— यदि पद्मिन्यां नापराध्यति जीमूतः दुश्शक एव भास्करेण तत्संहारः । भास्करस्य प्रभावः पद्मिनीमूलक एव । उक्तं हि श्रीमद्रामायणे—"अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" इति ।

**उद**—भास्करस्य प्रतापमहिमाऽपि शारदानन्दादेव ।

**शार**—अलमप्रकृतेन । ज्ञातव्या खलु पद्मिनीप्रवृत्तिः । काशस्तन्व ! ब्रूहि ततः ।

**काश**—हा ! क्षिपति पाषण्डा पद्मिनीकण्ठे खड्गम् ।

**उदयधरकासारौ**—( उत्थायाभिधावतः पावकम् ) ।

**शार**—( निवार्य ) ततः ।

**काश**—हर्षं नाटयित्वा ।

यावद्गले क्षिपति सा करवालमुग्रं
पापा दरद्युतिहरे रभसात्कृशाङ्ग्याः ।

तावद्गतस्सकुतुकं सहसैव तत्र
तां भास्करः प्रियतमामपसार्य धत्ते ॥

**शार**—अम्ब पद्मे! पद्मिनीमवसि स्म भास्करमुपनीय। (इत्यञ्जलिं बध्नाति)। (उदयधरकासारौ शारदानन्दपादयोः पततः)।

**शार**— मातस्सरोजसदने मरणात्स्वकीय-
लोकस्य पालनमिदं नत्र नैव चित्रम्।
दारिद्र्यमत्र मरणादतिरिच्यमानं
तूर्णं व्यपोह्य परिपालयसि स्वभक्तम् ॥

कलयसि भक्तिं दधतां महदैश्वर्यं मधुद्विषो दयिते।
परमां भक्तिं चरणे दत्से वहतान्तु मोक्षसाम्राज्यम् ॥

ततः।

**काश**— ओजायितेऽधुना कामं भास्करे पद्मिनीपतौ।
हिमानी खड्गमुत्सृज्य यत्र क्वापि निलीयते ॥

पलायन्ते पिशाचाः।

**कासा**—आश्वस्ताः स्मः।

**काश**—अहो महान् प्रमादः। (सर्वे ससम्भ्रमम्)।

**शार**—कथमिव।

**काश**— अट्टहासयुता शूलपट्टसायुधधारिणी।
भैरवी पद्मिनीयुक्तं भास्करं तं जिघांसति ॥

शारदानन्दं विनाऽन्ये मूर्च्छन्ति।

**शार**—सर्वान् मन्त्रपूतजलेन प्रोक्षयति। (उत्थाय सर्वे)। किं वा भविष्यति!।

**शार**—ततः।

**काश**— कृताट्टहासां दरहासिवक्त्रा शूलं दधानां दधती सरोजम्।
रक्तेक्षणामेणविलोचनैषा तां वीक्ष्य लक्ष्मीरिह हुङ्करोति ॥

केकयेव शिखण्डिन्या हुंकृत्या केवलं श्रियः।
उरगी भैरवी भीता वीतदर्पाऽद्य वेपते ॥

शार—ततः ।

काश— शूलं निधाय पुरतो मधुवैरिपत्न्याः
सा भैरवी क्षितितले प्रणिपत्य भूयः ।
प्राह प्रसीद भगवत्यपराधमम्ब
सोढ्वा नियुङ्क्ष्व करणीयविधाविहेति ॥

नियुङ्क्ते देवी ।

शार— कथमिव ।

काश— आरोप्य भक्तान् मम दिव्ययानं भूतैर्महद्भिर्विरजःपदव्या ।
समेन वेगेन पदं तदीयं नीत्वा सुहृद्भिः सह योजयेति ॥

अङ्गीकृत्य निदेशं तमुत्तमाङ्गेन भैरवी ।
नतेन वदनं देव्याः पश्यन्त्यपसरत्यनु ॥

शार—ततः ।

काश—पद्मिनी स्तौति पद्मालयाम् ।

कासा— कथम् ।

काश— भयं नाशयन्तीं स्वयं ध्यायतां स्वं
लयं भावयन्तीं नयं प्रोज्झतां द्राक् ।
वयं त्वां नताः स्मः प्रियं वर्धयन्तीं
श्रियं पाहि नित्यं जयं देहि मातः ॥

हरेः प्रेयसीं तां करेऽब्जं दधानां
हरेन्द्रादिवन्द्यामरे चित्त नित्यम् ।
स्मरेयं स्वरक्षाध्वरे दीक्षिता हि
स्फुरेन्नः सुखं श्रीररेनैव भीतिः ॥

नमस्ते समस्तेश्वरि श्रीर्मुरारे-
रुरस्यात्तवासे स्थिरोद्यद्विलासे ।
उपासे त्वदंघ्रिं लसन्मन्दहासे
कृपानीरराशे सतां पूरिताशे ॥

**शार**—ततः ।

**काश**—श्रूयते वियति कापि कोमला वाणी ।

**कासा**—कथमिव

**काश**— **वत्से तवैव विपदां नाशः पुष्टिश्च संपदाम् ।**
**भूयादिदं ते चरितं वदतां शृण्वतामपि ॥** इति ।

**शार**—किं ब्रूमहे प्रसादमहिमानं मधुसूदनशुद्धान्तपरिबृढायाः ! ।

**कासा**—ततः ।

**काश**— **स्नातानामप्सु पुण्यासु तेषामाविरभूत्पुरः ।**
**अम्बरं विविधं भूषानिकरश्चानुलेपनम् ॥**

**शार**—किं दुर्लभं लब्धलक्ष्मीकटाक्षणाम् ।

**कासा**—भगवन् !

**कासारस्य च पद्मिन्या भास्करस्यापि वा प्रभो ।**
**भास्वरत्वे भवानेव निदानं पङ्कभञ्जने ॥**

**शार**—ततः ।

**काश**—प्रविशन्ति सर्वे नगरम् । परिवृण्वते नगररक्षकाश्शस्त्रपाणयः सक्रोधमेतान् ।

**उद**—किमेतद्धृदयशल्यम् ?

**कासा**—आर्य ! नैतद्दुश्शकं भवत्तनुजस्य शस्त्रपाणीनां तापोत्पादनम् ।

**काश**— **प्रसरति दिशि भास्करप्रतापे बहुलतरे तरुसश्चये निलीनः ।**
**स्वजन इति नृपात्मजो विदित्वा द्रुततरमेति रणाय कोपभीमः ॥**

**उद**—निरायुधो ध्वजिनीरहितश्च वत्सः कथं जेष्यति शस्त्रपाणीन् योधान् ।

**कासा**—निसर्गसिद्धतेजसां किमुपकरणेन ?

**शार**—ततः ।

**काश**—हन्त भास्करस्य विजृम्भणम् ।

**तां भास्करे तपति दुस्सहतेजसि स्वां**
**सेनां क्षणेन कलभः पृथुकुन्तदन्तः ।**

तां पद्मिनीं सरभसं कुमुदाकरं च

उदयधरकासारौ—( ससम्भ्रमं ) ततस्ततः ।

काश— हन्त गतः

कासा—हा !

शार—भण भण ।

हत इवाजनि भास्करेण ॥

काश—ततः ।

शार—क्वचिन्निलीने कलभे विस्मिताः शुद्धान्तवृद्धाङ्गनाः पुरस्कृत्य कुमुदाकरस्य कौमुदीं शरणं गता उदयधरात्मजम् ।

कासा—( सहर्षं ) ततः ।

काश— यथा राजति ते पुत्री भास्करं प्राप्य भास्वरम् ।
तथा कासारराजेन्द्र तव पुत्रश्च कौमुदीम् ॥

शार—ततः ।

काश— जम्बत्योर्युगलं श्रीमद्व्योमयानं समुन्नतम् ।
आरुह्यानीयते व्योम्नि भूतैर्नात्यन्तवेगिभिः ॥

श्रीमद्विभीषणनिदेशपरोपनीतं तत् पुष्पकं समधिरुह्य यथा स रामः ।
तद्वद्विमानमतितुङ्गमिदं प्रमोदादारुह्य भास्कर इह प्रतिभाति पत्न्या ॥

कासारसूनुना सख्या सुग्रीवेणेव राघवः ।
प्रदर्शयंस्तं तं देशं भास्करो वक्ति वल्लभाम् ॥

कासा—उत्कण्ठते द्रष्टुं वत्सान् मनः । कियद्दूरे वर्तन्ते ?

काश—दूरं नाम । दृश्यते नगरगोपुरोपरि व्योमयानम् ।

( प्रविश्य पटाक्षेपेण कञ्चुकी ) ।

देव, गअणादो ओदरइ कोपि विमाणराओ विज्जुप्पहापुंजो विअ । ( देव ! गगनादवतरति कोऽपि विमानराजो विद्युत्प्रभापुञ्ज इव ) ।

( सर्वे सहर्षमुत्तिष्ठन्ति )

शार—( सर्वान् पुरस्कृत्य परिक्रामति ) ।

( प्रविशन्ति भास्करादयः विमानादस्पृष्टभूतलादवतरणं नाटयन्तः । प्रणमन्ति शारदानन्दादीन् गुरून् । सर्वे यथोचितमाशिषं प्रयुञ्जते ) ।

शार—उपविशामः कल्याणगृहे। (सर्वे परिक्रम्य समुपविशन्ति)।

शार—(उदयधरं प्रति)

निर्जित्य शत्रूनिव भूमिकन्यां रामः स कासारसुतां सुतस्ते।
सम्प्राप्तवानत्र विशेष एष प्राप्नोति जीवन्निह स्वतातम्॥

उद—(शारदानन्दं प्रति)

कौशिकेन यथा रामः प्रापितस्सकलां श्रियम्।
परिपन्थितमोहन्त्रा भवता भास्करस्तथा॥

शार—वत्स, कासारस्तम्ब!

जीमूतो व्योमन्निहत्य विमतं मत्तेभकं दुर्मदः
कासारोऽप्यपकल्मषः स्वतनुजां दृष्ट्वा प्रियं भास्करम्।
लब्धोल्लासिमुखाम्बुजां तनुभुवं प्राप्यामलां कौमुदीं
संहृष्टश्च स भास्करस्य जनको हृष्टः स्वपुत्रोदयात्॥

उदयधरकासारौ—भगवन्! सर्वं भद्रं तव प्रभावात्।

शार—भगवत्या इन्दिरायाः प्रसादात्।

यस्याः प्रसादमुपलभ्य शशाङ्कचूडश्चापं पिनाकमधिगम्य विराजतीति।
सङ्कीर्त्यते स्फुटमृचा कमलालया सा केनामरेण न भवेदभिवन्दनीया॥

अस्येशानेति वाक्येन यजुषा स्तूयतेतराम्।
या देवी तां विना लोकमाता स्यात् का परा श्रुता॥

गन्धद्वारेति मन्त्रेण सर्वभूतेश्वरीति या
निगद्यते विना लक्ष्मीं का परा भूतरक्षिणी॥

आविर्भूते दिनकरकुले रामनाम्ना स्वनाथे
भूमेर्जाता जनकसदने सञ्चरन्ती सखीभिः।
नीत्वा कञ्चित्समयमथ तं नाथमेव प्रपन्ना
हेतुर्दुष्टाशरकुललये याऽभवत्तां प्रपद्ये॥

सोढ्वापि माता स्तनवेदनां वा स्तन्यं यथा पाययति स्वबालम्।
सीता तथा सोढनिशाचरार्त्तिर्लोकं दशास्यक्षयहर्षमाध्वीम्॥

किमधिकेन—न सुरो वा नरो वा स्यात् श्रीमान् यत्करुणां विना
भक्तावनपरां देवीं धन्याः स्मस्तां नता वयम्॥

JTASUR

कासा—सत्यमाह भवान् ।

उद— जगद्रक्षाविनिद्राभ्यां पितृभ्यां जगतां स्वयम् ।
जानकीरघुनाथाभ्यां नित्यमस्तु सुमङ्गलम् ॥

भास्करः— दुष्टराक्षसशिक्षैकदक्षायाक्षविनाशिने ।
साधुरक्षाधुरीणाय मङ्गलं वायुसूनवे ॥

कुमु— पक्षविक्षेपविध्वस्तसर्पदर्पाय पक्षिणाम् ।
सार्वभौमाय महते सर्वदास्तु सुमङ्गलम् ॥

अरुणः— (भास्करं परिष्वजते) ।

मिलिन्दः— ( कुमुदाकरं आलिङ्गति ) ।

( सर्वे सौत्सुक्यं परस्परमीक्षन्ते ) ।

शार—भास्कर ! किं ते भूयः प्रियमुपहरामि ।

भास्करः— [1] सन्मार्गे स्थिरतां गतोऽहमनिशं भोः पावनेऽस्मिन्कला-
पूर्णोऽनुग्रहतस्तवाविकलतो ध्वस्तास्समस्तापदः ।
निर्विघ्नोऽजनि पद्मिनीपरिणयो योगीन्द्रसंसेवित
स्वामिन् धैर्यजिताक्ष नाथ भगवन्सर्वं मयाप्तं शुभम् ॥

तथापीदमस्तु :— ( भरतवाक्यम् ) ।

भूदेवा विलसन्तु सद्विधिरता नित्यं लसत्कीर्तयो
राजानः पृथिवीसुरार्चनपरा जीवन्तु सन्तश्चिरम् ।
नन्दन्त्वत्र पराः प्रजाश्च पशवो भूरस्तु सस्योज्ज्वला
भक्तिस्सुन्दरराजसूरिहृदये रामस्य संवर्धताम् ॥

इति पद्मिनीपरिणये दशमोऽङ्कः ॥






॥ रामदूताय नमः ॥

॥ शुभमस्तु ॥

1. सन्मार्गे इति । अनेन पद्येन भास्करस्य शारदानन्दं प्रति कथनं, कवेः श्रीहनूमन्तं प्रति प्रार्थनञ्च प्रतिपाद्यते । भोः शारदानन्द । पावने पवन [illegible] सन्मार्गे वियति परिशुद्धे साधुपथे च अन्यत्र । पावने पवनकुमार । धैर्येण जितेन्द्रि[illegible] च ॥

015,256,1
152J52

